सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ॥४०॥
शुण्ठ्याः कर्षं गुड़स्य द्वौ धौतात् कृष्णतिलात् पलम्।
खादन्नेकत्र संचूर्ण्य कोष्णक्षीरानुयोजितम् ॥ ४१ ॥
वातहृद्रोगगुल्मार्शोयोनिशूलशकृद्ग्रहान्।
पिबेदेरण्डतैलं तु वातगुल्मी प्रसन्नया ॥ ४२ ॥
श्लेष्मण्यनुबले वायौ पित्ते तु पयसा सह।
विवृद्धं यदि वा पित्तं सन्तापं वातगुल्मिनः ॥ ४३ ॥
कुर्य्याद्विरेचनीयोऽसौ सस्नेहैरानुलोमिकैः।
तापानुवृत्तावेवं च रक्तं तस्याऽवसेचयेत् ॥ ४४ ॥
साधयेत् शुद्धशुष्कस्य लशुनस्य चतुःपलम्।
क्षीरोदकेऽष्टगुणिते क्षीरशेषं च पाचयेत् ॥ ४५ ॥
वातगुल्ममुदावर्त्तं गृध्रसीं विषमज्वरम्।
हृद्रोगं विद्रधिं शोषं साधयत्याशु तत् पयः ॥ ४६ ॥
तैलं प्रसन्नागोमूत्रमारनालं यवाग्रजः।
गुल्मं जठरमानाहं पीतमेकत्र साधयेत् ॥ ४७ ॥
चित्रकग्रन्थिकैरण्डशुण्ठीक्वाथः परं हितः।
शूलानाहविबन्धेषु सहिङ्गुविडसैन्धवः ॥ ४८ ॥
पुष्करैरण्डयोर्मूलं यवधन्वयवासकम्।
जलेन क्वथितं पीतं कोष्ठदाहरुजापहम् ॥ ४९ ॥
वाट्याह्वैरण्डदर्भाणां मूलं दारु महौषधम्।
पीतं निःक्वाथ्य तोयेन कोष्ठपृष्ठांससूलजित् ॥ ५० ॥
शिलाजं पयसाऽनल्पपञ्चमूलशृतेन वा।
वातगुल्मी पिबेद्वाट्यमुदावर्त्ते तु भोजयेत् ॥ ५१ ॥
स्निग्धं पैप्पलिकैर्यूषैर्मूलकानां रसेन वा।
बद्धविण्मारुतोऽश्नीयात् क्षीरेणोष्णेन यावकम् ॥५२॥
कुल्माषान् वा बहुस्नेहान् भक्षयेल्लवणोत्तरान्।

नीलिनीत्रिवृतादन्तीपथ्याकम्पिल्लकैः सह ॥ ५३ ॥
समलाय घृतं देयं सविड़क्षारनागरम्।
नीलिनीं त्रिफलां रास्नां बलां कटुकरोहिणीम् ॥५४॥
पचेद्विड़ङ्गं व्याघ्रीं च पालिकानि जलाढ़के।
रसेऽष्टभागशेषे तु घृतप्रस्थं विपाचयेत् ॥ ५५ ॥
दध्नः प्रस्थेन संयोज्य सुधाक्षीरपलेन च।
ततो घृतपलं दद्याद्यवागूमण्डमिश्रितम् ॥ ५६ ॥
जीर्णे सम्यग्विरिक्तञ्च भोजयेद्रसभोजनम्।
गुल्मकुष्ठोदरव्यङ्गशोफपाण्ड्वामयज्वरान् ॥ ५७ ॥
श्वित्रं प्लीहानमुन्मादं हन्त्येतं नीलिनीघृतम्।
कुक्कुटाश्च मयूराश्च तित्तिरीक्रौञ्चवर्त्तकाः ॥ ५८ ॥
शालयो मदिराः सर्पिर्वातगुल्मचिकित्सितम्।
मितमुष्णं द्रवं स्निग्धं भोजनं वातगुल्मिनाम् ॥ ५९ ॥
समण्डावारुणीपानं तप्तं वा धान्यकैर्जलम्।
स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम् ॥ ६० ॥
द्राक्षाभयागुड़रसं कम्पिल्लं वा मधुद्रुतम्।
कल्योक्तं रक्तपित्तोक्तं गुल्मे रूक्षोष्णजे पुनः ॥ ६१ ॥
परं संशमनं सर्पिस्तिक्तं वासाघृतं शृतम्।
तृणाख्यपञ्चकक्काथे जीवनीयगणेन वा ॥ ६२ ॥
शृतं तेनैव वा क्षीरं न्यग्रोधादिगणेन वा।
तत्रापि स्रंसनं युञ्ज्याच्छीघ्रमात्ययिके भिषक् ॥ ६३ ॥
वैरेचनिकसिद्धेन सर्पिषा पयसाऽपि वा।
रसेनामलकेक्षूणां घृतप्रस्थं विपाचयेत् ॥ ६४ ॥
पथ्यापादं पिबेत्सर्पिस्तत्सिद्धं पित्तगुल्मनुत्।
पिबेद्वा तैल्वकं सर्पिर्यच्चोक्तं पित्तविद्रधौ ॥ ६५ ॥
द्राक्षां पयस्यां मधुकं चन्दनं पद्मकं मधु।

पिबेत्तण्डुलतोयेन पित्तगुल्मोपशान्तये ॥ ६६ ॥
द्विपलं त्रायमाणाया जलद्विप्रस्थसाधितम्।
अष्टभागस्थितं पूतं कोष्णं चीरसमं पिबेत् ॥ ६७ ॥
पिबेदुपरि तस्योष्णं चीरमेव यथाबलम्।
तेन निर्हृतदोषस्य गुल्मः शाम्यति पैत्तिकः ॥ ६८ ॥
दाहेऽभ्यङ्गो घृतैः शीतैः साज्यैर्लेपो हिमौषधैः।
स्पर्शः सरोरुहां पत्रैः पात्रैश्च प्रचलज्जलैः ॥ ६९ ॥
विदाहपूर्वरूपेषु शूले वह्नेश्च मार्दवे।
बहुशोऽपहरेद्रक्तं पित्तगुल्मे विशेषतः ॥ ७० ॥
छिन्नमूला विदह्यन्ते न गुल्मा यान्ति च चयम्।
रक्तं हि व्यम्लतां याति तच्च नास्ति न चाऽस्ति रुक् ॥७१॥
हृतदोषं परिम्लानं जाङ्गलैस्तर्पितं रसैः।
समाश्वस्तं सशेषार्त्तिं सर्पिरभ्यासयेत् पुनः ॥ ७२ ॥
रक्तपित्तातिवृद्धत्वात् क्रियामनुपलभ्य वा।
गुल्मे पाकोन्मुखे सर्वा पित्तविद्रधिवत् क्रिया ॥ ७३ ॥
शालिर्गव्याजपयसा पटोली जाङ्गलं घृतम्।
धात्रीपरूषकं द्राचा खर्जूरं दाड़िमं सिताम् ॥ ७४ ॥
भोज्यं पानेऽम्बुबलया बृहत्याद्यैश्च साधितम्।
श्लेष्मजे वामयेत् पूर्वमवम्यमुपवासयेत् ॥ ७५ ॥
तिक्तोष्णकटुसंसर्ग्या वह्निं सन्धुक्षयेत्ततः।
हिङ्ग्वादिभिश्च द्विगुणचारहिङ्ग्वम्लवेतसैः ॥ ७६ ॥
निगूढ़ं यदि वोन्नद्धं स्तिमितं कठिनं स्थिरम्।
आनाहादियुतं गुल्मं संशोध्य विनयेदनु ॥ ७७ ॥
घृतं सचारकटुकं पातव्यं कफगुल्मिना।
सव्योषचारलवणं सहिङ्गुविडदाड़िमम् ॥ ७८ ॥
कफगुल्मं जयत्याशु दशमूलशृतं घृतम्।

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम् ॥ ७९ ॥
अल्पं तोयाढ़के साध्यं पादशेषेण तेन च।
तुल्यं घृतं तुल्यपयो विपचेदक्षसम्मितैः ॥ ८० ॥
विड़ङ्गहिङ्गुसिन्धूत्थयावशूकशठीविडैः।
सद्वीपिरास्नायष्ट्याह्वषड्ग्रन्थाकणनागरैः ॥ ८१ ॥
एतद्भल्लातकघृतं कफगुल्महरं परम्।
प्लीहपाण्ड्वामयश्वासग्रहणीरोगकासनुत् ॥ ८२ ॥
ततोऽस्य गुल्मे देहे च समस्ते स्वेदमाचरेत्।
सर्वत्र गुल्मे प्रथमं स्नेहस्वेदोपपादिते ॥ ८३ ॥
या क्रिया क्रियते याति सा सिद्धिं न विरूक्षिते।
स्निग्धस्विन्नशरीरस्य गुल्मे शैथिल्यमागते ॥ ८४ ॥
यथोक्तां घटिकां न्यस्येद् गृहीतेऽपनयेच्च ताम्।
वस्त्रान्तरं ततः कृत्वा छिन्द्याद् गुल्मं प्रमाणवित् ॥८५॥
विमार्गाजपदादर्शैर्यथालाभं प्रपीड़येत्।
मृद्नीयाद् गुल्ममेवैकं न त्वन्त्रहृदयं स्पृशेत् ॥ ८६ ॥
तिलैरण्डातसीबीजसर्षपैः परिलिप्य च।
श्लेष्मगुल्ममयस्पात्रैः सुखोष्णैः स्वेदयेत्ततः ॥ ८७ ॥
एवं च विसृतं स्थानात् कफगुल्मं विरेचनैः।
सस्नेहैर्बस्तिभिश्चैनं शोधयेद्दशमूलकैः ॥ ८८ ॥
पिप्पल्यामलकद्राक्षाश्यामाद्यैः पालिकैः पचेत्।
एरण्डतैलहविषोः प्रस्थौ पयसि षड्गुणे ॥ ८९ ॥
सिद्धोऽयं मिश्रकः स्नेहो गुल्मिनां स्रंसनं हितम्।
वृद्धिविद्रधिशूलेषु वातव्याधिषु चामृतम् ॥ ९० ॥
पिबेद्वा नीलिनीसर्पिर्मात्रया द्विपलीकया।
तथैव सुकुमाराख्यं घृतान्योदरिकाणि वा ॥ ९१ ॥
द्रोणेऽम्भसः पचेद्दन्त्याः पलानां पञ्चविंशतिम्।

चित्रकस्य तथा पथ्यास्तावतोऽस्याद्रसे स्रुते ॥ ९२ ॥
द्विप्रस्थे साधयेत् पूते चिपेद्दन्तीसमं गुड़म् ।
तैलात्पलानि चत्वारि त्रिवृतायाश्च चूर्णतः ॥ ९३ ॥
कणाकर्षौ तथा शुण्ठ्याः सिद्धे लेहे तु शीतले ।
मधुतैलसमं दद्याच्चतुर्जाताच्चतुर्थिकाम् ॥ ९४ ॥
अतो हरीतकीमेकां सावलेहपलामदन् ।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः ॥ ९५ ॥
गुल्महृद्रोगदुर्नामशोफानाहगरोदरान् ।
कुष्ठोत्क्लेशारुचिप्लीहग्रहणीविषमज्वरान् ॥ ९६ ॥
घ्नन्ति दन्तीहरीतक्यः पाण्डुतां च सकामलाम् ।
सुधाचीरद्रवं चूर्णं त्रिवृतायाः सुभावितम् ॥ ९७ ॥
कार्षिकं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ॥
कुष्ठश्यामात्रिवृद्दन्तीविजयाचारगुग्गुलुम् ॥ ९८ ॥
गोमूत्रेण पिबेदेकं तेन गुग्गुलुमेव वा ।
निरूहान् कल्पसिध्युक्तान् योजयेद् गुल्मनाशनान् ॥९९॥
ज्ञातमूलं महावास्तुं कठिनं स्तिमितं गुरुम् ।
गूढ़मांसं जयेद् गुल्मं चारारिष्टाग्निकर्मभिः ॥ १०० ॥
एकान्तरं द्व्यन्तरं वा विश्रमय्याथवा त्र्यहम् ।
शरीरदोषबलयोर्वर्द्धनचपणोद्यतः ॥ १०१ ॥
धर्मोऽश्मरीग्रहण्युक्ताः चारा योज्याः कफोल्बणे ।
देवदारुत्रिवृद्दन्तीकटुकापञ्चकोलकम् ॥ १०२ ॥
स्वर्जिकायावशूकाख्यौ श्रेष्ठापाठोपकुञ्चिकाः ।
कुष्ठं सर्षसुगन्धां च द्व्यचांशं पटुपञ्चकम् ॥ १०३ ॥
पालिकं चूर्णितं तैलवसादधिघृताप्लुतम् ।
घटास्यान्तः पचेत् पक्वमग्निवर्चे घटे च तम् ॥ १०४ ॥
चारं गृहीत्वा चीराज्यतक्रमद्यादिभिः पिबेत् ।

गुल्मोदावर्त्तवर्ध्माऽर्शोजठरग्रहणीकृमीन् ॥ १०५ ॥
अपस्मारगरोन्मादयोनिशुक्रामयाश्मरीः।
चारोऽगदोऽयं शमयेद्विषं चाखुभुजङ्गजम् ॥ १०६ ॥
श्लेष्माणं मधुरं स्निग्धं रसक्षीरघृताशिनः।
छित्त्वा भित्त्वाऽऽशयं क्षारः क्षारत्वात्पातयत्यधः ॥१०७॥
मन्देऽग्नावरुचौ सात्म्यैर्मद्यैः सस्नेहमश्नताम्।
योजयेदासवारिष्टान्निगदान्मार्गशुद्धये ॥ १०८ ॥
शालयः षष्टिका जीर्णाः कुलत्था जाङ्गलं पलम्।
चिरिविल्वाग्नितर्कारीयवानीवरणाङ्कुराः ॥ १०९ ॥
शिग्रुस्तरुणबिल्वानि बालं शुष्कं च मूलकम्।
बीजपूरकहिङ्ग्वम्लवेतसक्षारदाडिमम् ॥ ११० ॥
व्योषं तक्रं घृतं तैलं भक्तं पानं तु वारुणी।
धान्याम्लं मस्तु तक्रं च यवानीविड्चूर्णितम् ॥ १११ ॥
पञ्चमूलशृतं वारि जीर्णं माद्वीकमेव वा।
पिप्पलीपिप्पलीमूलचित्रकाजाजीसैन्धवैः ॥ ११२ ॥
सुरा गुल्मं जयत्याशु जाङ्गलस्य विमिश्रितः।
वमनैर्लङ्घनैः स्वेदैः सर्पिःपानैर्विरेचनैः ॥ ११३ ॥
वस्तिक्षारासवारिष्टगुटिकापथ्यभोजनैः।
श्लैष्मिको बद्धमूलत्वाद् यदि गुल्मो न शाम्यति ॥ ११४
तस्य दाहं हृते रक्ते कुर्य्यादन्ते शरादिभिः।
अथ गुल्मं सपर्य्यन्तं वाससान्तरितं भिषक् ॥ ११५ ॥
नाभिवस्त्यन्त्रहृदयं रोमराजीं च वर्जयेत्।
नातिगाढं परिमृशेच्छरेण ज्वलताऽथवा ॥ ११६ ॥
लौहेनारणिकोत्थेन दारुणा तैन्दुकेन वा।
ततोऽग्निवेगे शमिते शीतैर्व्रण इव क्रिया ॥ ११७ ॥
आमान्वये तु पेयाद्यैः सन्धुक्ष्याग्निं विलङ्घिते।

स्वं स्वं कुर्य्यात् क्रमं मिश्रं मिश्रदोषे च कालवित् ॥११८॥
गतप्रसवकालायै नार्य्यै गुल्मेऽस्रसम्भवे।
स्निग्धस्विन्नशरीरायै दद्यात् स्नेहविरेचनम्॥ ११९॥
तिलक्वाथो घृतगुड़व्योषभार्ङ्गीरजोऽन्वितः।
पानं रक्तभवे गुल्मे नष्टे पुष्पे च योषितः॥ १२०॥
भार्ङ्गीकृष्णाकरञ्जत्वग्ग्रन्थिकामरदारुजम्।
चूर्णं तिलानां क्वाथेन पीतं गुल्मरुजापहम्॥ १२१॥
पलाशक्षारपात्रे द्वे द्वे पात्रे तैलसर्पिषोः।
गुल्मशैथिल्यजननीं पक्त्वा मात्रां प्रयोजयेत्॥ १२२॥
न प्रभिद्येत यद्येवं दद्याद्योनिविरेचनम्।
क्षारेण युक्तं पललं सुधाक्षीरेण वा ततः॥ १२३॥
ताभ्यां वा भावितान् दद्याद् योनौ कटुकमत्स्यकान्।
वराहमत्स्यपित्ताभ्यां नक्तकान् वा सुभावितान् ॥१२४॥
किण्वं वा सगुड़क्षारं दद्याद् योनौ विशुद्धये।
रक्तपित्तहरं क्षारं लेहयेन्मधुसर्पिषा॥ १२५॥
लशुनं मदिरां तीक्ष्णां मत्स्यांश्चास्यै प्रयोजयेत्।
वस्तिं सक्षीरगोमूत्रं सक्षारं दाशमूलिकम्॥ १२६॥
अप्रवर्त्तमाने रुधिरे हितं गुल्मप्रभेदनम्।
यमकाभ्यक्तदेहायाः प्रवृत्ते समुपेक्षणम्॥ १२७॥
रसौदनस्तथाऽऽहारः पानं च तरुणी सुरा।
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहराः क्रियाः॥ १२८॥
कार्य्या वातरुगार्त्तायाः सर्वा वातहराः पुनः।
अनाहादावुदावर्त्तबलासघ्नौ यथायथम्॥ १२९॥

---

## पञ्चदशोऽध्यायः।

अथातः उदरचिकित्सितं व्याख्यास्यामः॥

दोषातिमात्रोपचयात् स्रोतोमार्गनिरोधनात्।
सम्भवत्युदरं तस्मात् नित्यमेनं विरेचयेत्॥ १॥
पाययेत्तैलमैरण्डं समूत्रं सपयोऽपि वा।
मासं द्वौ वाऽथवा गव्यं मूत्रं माहिषमेव वा॥ २॥
पिबेद् गोक्षीरभुक् स्याद्वा करभीक्षीरवर्त्तनः।
दाहानाहातितृण्मूर्च्छापरीतस्तु विशेषतः॥ ३॥
रूक्षाणां बहुवातानां दोषसंशुद्धिकाङ्क्षिणाम्।
स्नेहनीयानि सर्पींषि जठरघ्नानि योजयेत्॥ ४॥
षट्पलं दशमूलाम्बु मस्तुद्व्याढकसाधितम्।
नागरं त्रिपलं प्रस्थं घृततैलात्तथाढकम्॥ ५॥
मस्तुनः साधयित्वैतत् पिबेत्सर्वोदरापहम्।
कफमारुतसम्भूते गुल्मे च परमं हितम्॥ ६॥
चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात्पले।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत्॥ ७॥
यवकोलकुलत्थानां पञ्चमूलस्य चाम्भसा।
सुरासौवीरकाभ्यां च सिद्धं वा पाययेद् घृतम्॥ ८॥
एभिः स्निग्धाय सञ्जाते बले शान्ते च मारुते।
स्रस्ते दोषाशये दद्यात्कल्पदृष्टं विरेचनम्॥ ९॥
पटोलमूलं त्रिफलां निशां वेल्लं च कार्षिकम्।
कम्पिल्लनीलिनीकुम्भभागान् द्वित्रिचतुर्गुणान्॥ १०॥
पिबेत्सचूर्ण्यं मूत्रेण पेयां पूर्वं ततो रसैः।
विरक्तो जाङ्गलैरद्यात्ततः षड्दिवसं पयः॥ ११॥
शृतं पिबेद् व्योषयुतं पीतमेवं पुनः पुनः।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि॥ १२॥

गवाक्षीं शङ्खिनीं दन्तीं तिल्वकस्य त्वचं वचाम् ।
पिबेल्लर्कन्धुमृद्वीकाकोलाम्भोमूत्रसीधुभिः ॥ १३ ॥
यवानी हपुषाधान्यं शतपुष्पोपकुञ्चिका ।
कारवी पिप्पलीमूलमजगन्धा शठी वचा ॥ १४ ॥
चित्रकाजाजिकं व्योषं स्वर्णक्षीरी फलत्रयम् ।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ॥ १५ ॥
विडङ्गं च समांशानि दन्त्या भागत्रयं तथा ।
त्रिवृद्विशाले द्विगुणे सातला च चतुर्गुणा ॥ १६ ॥
एष नारायणो नाम चूर्णो रोगगणापहः ।
नैनं प्राप्याभिवर्द्धन्ते रोगा विष्णुमिवासुराः ॥ १७ ॥
तक्रेणोदरिभिः पेयो गुल्मिभिर्बदराम्बुना ।
आनाहवाते सुरया वातरोगे प्रसन्नया ॥ १८ ॥
दधिमण्डेन विट्सङ्गे दाड़िमाम्भोभिरर्शिभिः ।
परिकर्त्ते सवृक्षाम्लैरुष्णाम्बुभिरजीर्णके ॥ १९ ॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे ।
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्देऽनले ज्वरे ॥ २० ॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ।
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥ २१ ॥
हपुषां काञ्चनक्षीरीं त्रिफलां नीलिनीफलम् ।
त्रायन्तीं रोहिणीं तिक्तां सातलां त्रिवृतां वचाम् ॥२२॥
सैन्धवं काललवणं पिप्पलीं चेति चूर्णयेत् ।
दाड़िमत्रिफलामांसरसमूत्रसुखोदकैः ॥ २३ ॥
पेयोऽयं सर्वगुल्मेषु प्लीह्नि सर्वोदरेषु च ।
श्वित्रे कुष्ठेष्वजरके सदने विषमेऽनले ॥ २४ ॥
शोफार्शःपाण्डुरोगेषु कामलायां हलीमके ।
वातपित्तकफांश्चाशु विरेकेण प्रसाधयेत् ॥ २५ ॥

नीलिनीं निचुलं व्योषं क्षारौ लवणपञ्चकम्।
चित्रकं च पिबेच्चूर्णं सर्पिषोदरगुल्मनुत्॥ २६॥
पूर्ववच्च पिबेद् दुग्धं क्षामः शुद्धोऽन्तरान्तरा।
कारभं गव्यमाजं वा दद्यादात्ययिके गदे॥ २७॥
स्नेहमेव विरेकार्थे दुर्बलेभ्यो विशेषतः।
हरीतकीसूक्ष्मरजः प्रस्थयुक्तं घृताढ़कम्॥ २८॥
अग्नौ विलाप्य मथितं खजेन यवपल्लके।
निधापयेत्ततो मासादुद्धृतं गालितं पचेत्॥२९॥
हरीतकीनां क्वाथेन दध्ना चाम्लेन संयुतम्।
उदरं गरमष्ठीलामानाहं गुल्मविद्रधिम्॥ ३०॥
हन्त्येतत्कुष्ठमुन्मादमपस्मारं च पानतः।
स्नुक्क्षीरयुक्ताद्गोक्षीराच्छृतशीतात् खजाहतात्॥३१॥
यज्जातमाज्यं स्नुक्क्षीरसिद्धं तच्च तथागुणम्।
क्षीरद्रोणं सुधाक्षीरप्रस्थार्द्धेन युतं दधि॥ ३२॥
जातं मथित्वा तत्सर्पिस्त्रिवृत्सिद्धं च तद्गुणम्।
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत्॥ ३३॥
स्नुक्क्षीरपलकल्केन त्रिवृता षट्पलेन च।
एषां चानु पिबेत् पेयां रसं स्वादु पयोऽथवा॥ ३४॥
घृते जीर्णे विरिक्तश्च कोष्णं नागरसाधितम्।
पिबेदम्बु ततः पेयां ततो यूषं कुलत्थजम्॥ ३५॥
पिबेद्रूक्षस्त्र्यहं त्वेवं भूयो वाऽप्रतिभोजितः।
पुनः पुनः पिबेत् सर्पिरानुपूर्व्याऽनयैव च॥ ३६॥
घृतान्येतानि सिद्धानि विदध्यात् कुशलो भिषक्।
गुल्मानां गरदोषाणामुदराणां च शान्तये॥ ३७॥
पीलुकल्कोपसिद्धं वा घृतमानाहभेदनम्।
तैल्वकं नीलिनीं सर्पिः स्नेहं वा मिश्रकं पिबेत्॥ ३८

हृतदोषः क्रमादश्नन् लघुशाल्योदनं प्रति।
उपयुञ्जीत जठरी दोषशेषनिवृत्तये ॥ ३९ ॥
हरीतकीसहस्रं वा गोमूत्रेण पयोऽनुपः।
सहस्रं पिप्पलीनां वा स्नुक्क्षीरेण सुभावितम् ॥४०॥
पिप्पलीं वर्द्धमानां वा क्षीराशी वा शिलाजतु।
तद्वद्वा गुग्गुलुं क्षीरं तुल्यार्द्रकरसं तथा ॥ ४१ ॥
चित्रकामरदारुभ्यां कल्कं क्षीरेण वा पिबेत्।
मासं युक्तस्तथा हस्तिपिप्पली विश्वभेषजम् ॥ ४२ ॥
विड़ङ्गं चित्रको दन्ती चव्यं व्योषं च तैः पयः।
कल्कैः कोलसमैः पीत्वा प्रवृद्धमुदरं जयेत् ॥ ४३ ॥
भोज्यं भुञ्जीत वा मासं स्नुहीक्षीरघृतान्वितम्।
उत्कारिकां वा स्नुक्क्षीरपीतपथ्याकणाकृताम् ॥४४॥
पार्श्वशूलमुपस्तम्भहृद्ग्रहं च समीरणः।
यदि कुर्य्यात् ततस्तैलं विल्वक्षारान्वितं पिबेत् ॥४५॥
पक्वं वा टिण्टुकवलापलाशं तिलजालजैः।
क्षारैः कदल्यपामार्गतर्कारिजैः पृथक् कृतैः ॥ ४६ ॥
कफे वातेन पित्ते वा ताभ्यां वाप्यावृतेऽनिले।
वलिनः स्वौषधं युक्तं तैलमैरण्डजं हितम् ॥ ४७ ॥
देवदारुपलाशार्कहस्तिपिप्पलीशिग्रुकैः।
साश्वकर्णैः सगोमूत्रैः प्रदिह्यादुदरं बहिः ॥ ४८ ॥
वृश्चिकालीवचाशुण्ठीपञ्चमूलपुनर्नवात्।
वर्षाभूधान्यकुष्ठाच्च क्वाथैर्मूत्रैश्च सेचयेत् ॥ ४९ ॥
विरिक्तं म्लानमुदरं स्वेदितं साल्वलादिभिः।
वाससा वेष्टयेदेवं वायुर्नाऽऽध्मापयेत् पुनः ॥ ५० ॥
सुविरिक्तस्य यस्य स्यादाध्मानं पुनरेव तम्।
सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत् ॥ ५१ ॥

सोपस्तम्भश्चापि वायुराध्मापयति यं नरम्।
तीक्ष्णाः सक्षारगोमूत्राः शस्यन्ते तस्य वस्तयः ॥५२॥
इति सामान्यतः प्रोक्ताः सिद्धा जठरिणां क्रियाः।
वातोदरेऽथ बलिनं विदार्य्यादिशृतं घृतम् ॥ ५३ ॥
पाययेत् तु ततः स्निग्धं स्वेदिताङ्गं विरेचयेत्।
बहुशस्तैल्वकेनैनं सर्पिषा मिश्रकेण वा ॥ ५४ ॥
कृते संसर्जने क्षीरं बलार्थमवचारयेत्।
प्रागुत्क्लेशान्निवर्त्तेत बले लब्धे क्रमात् पयः ॥५५॥
यूषैः रसैर्वा मन्दाम्ललवणैरेधितानलम्।
सोदावर्त्तं पुनः स्निग्धं स्विन्नमास्थापयेत् ततः ॥ ५६ ॥
तीक्ष्णाधोभागयुक्तेन दाशमूलिकवस्तिना।
तिलोरुबूकतैलेन वातघ्नाम्लशृतेन च ॥ ५७ ॥
स्फुरणाक्षेपसन्ध्यस्थिपार्श्वपृष्ठत्रिकार्त्तिषु।
रूक्षं बद्धशकृद्वातं दीप्ताग्निमनुवासयेत् ॥ ५८ ॥
अविरेच्यस्य शमना वस्तिक्षीरघृतादयः।
बलिनं स्वादुसिद्धेन पैत्ते संस्नेह्य सर्पिषा ॥ ५९ ॥
श्यामात्रिभण्डीत्रिफलाविपक्केन विरेचयेत्।
सितामधुघृताढ्येन निरूहोऽस्य ततो हितः ॥ ६० ॥
न्यग्रोधादिकषायेण स्नेहवस्तिश्च तच्छृतः।
दुर्बलं त्वनुवास्यादौ शोधयेत् क्षीरवस्तिभिः ॥ ६१ ॥
जाते त्वग्निबले स्निग्धं भूयो भूयो विरेचयेत्।
क्षीरेण सत्रिवृत्कल्केनोरुबूकशृतेन तम् ॥ ६२ ॥
सातलात्रायमाणाभ्यां शृतेनारग्वधेन वा।
सकफे वा समूत्रेण सतिक्ताज्येन सानिले ॥ ६३ ॥
पयसान्यतमेनैषां विदार्य्यादिशृतेन वा।
भुञ्जीत जठरं चास्य पायसेनोपनाहयेत् ॥ ६४ ॥

पुनः क्षीरं पुनर्वस्तिं पुनरेव विरेचनम् ।
क्रमेण ध्रुवमातिष्ठन्यतः पित्तोदरं जयेत् ॥ ६५ ॥
वत्सकादि विपक्वेन कफे संस्नेह्य सर्पिषा ।
स्विन्नं स्नुक्क्षीरसिद्धेन बलवन्तं विरेचितम् ॥ ६६ ॥
संसर्जयेत् कटुक्षारयुक्तैरन्नैः कफापहैः ।
मूत्रत्र्यूषणतैलाढ्यो निरूहोऽस्य ततो हितः ॥६७॥
मुष्ककादिकषायेण स्नेहवस्तिश्च तच्छृतः ।
भोजनं व्योषदुग्धेन कौलत्थेन रसेन वा ॥ ६८ ॥
स्तैमित्यारुचिहृल्लासैर्मन्देऽग्नौ मद्यपाय च ।
दद्यादरिष्टान् क्षारांश्च कफस्त्यानस्थिरोदरे ॥ ६९ ॥
हिङ्गूपकुल्ये त्रिफलां देवदारु निशाद्वयम् ।
भल्लातकं शिग्रुफलं कटुकां तिक्तकं वचाम् ॥ ७० ॥
शुण्ठीं माद्रीं घनं कुष्ठं सरलं पटुपञ्चकम् ।
दाहयेज्जर्जरीकृत्य दधिस्नेहचतुष्कवत् ॥ ७१ ॥
अन्तर्धूमं ततः क्षाराद्विडालपदकं पिबेत् ।
मदिरादधिमण्डोष्णजलारिष्टसुरासवैः ॥ ७२ ॥
उदरं गुल्ममष्ठीलां तून्यौ शोफं विषूचिकाम् ।
प्लीहहृद्रोगगुदजानुदावर्त्तं च नाशयेत् ॥ ७३ ॥
जयेदरिष्टगोमूत्रचूर्णायस्कृतिपानतः ।
सक्षारतैलपानैश्च दुर्बलस्य कफोदरम् ॥ ७४ ॥
अयनाह्वं ससिद्धार्थकिण्वैर्बीजैश्च मूलकात् ।
कल्कितैरुदरस्वेदमभीक्ष्णं चात्र योजयेत् ॥ ७५ ॥
सन्निपातोदरे कुर्य्यान्नातिक्षीणबलानले ।
दोषोद्रेकानुरोधेन प्रत्याख्याय क्रियामिमाम् ॥ ७६ ॥
दन्तीद्रवन्तीफलजं तैलं पाने च शस्यते ।
क्रियानिवृत्ते जठरे त्रिदोषे तु विशेषतः ॥ ७७ ॥

दद्यादापृच्छ्य तज्ज्ञातीन् पातुं मद्येन कल्कितम्।
मूलं काकादनीगुञ्जाकरवीरकसम्भवम्॥ ७८॥
पानभोजनसंयुक्तं दद्याद् वा स्थावरं विषम्।
यस्मिन् वा कुपितः सर्पो विमुञ्चति फले विषम्॥ ७९॥
तेनास्य दोषसङ्घातः स्थिरो लीनो विमार्गगः।
बहिः प्रवर्त्तते भिन्नो विषेणाशु प्रमाथिना॥ ८०॥
तथा व्रजत्यगदतां शरीरान्तरमेव वा।
हृतदोषं तु शीताम्बु स्नातं तं पाययेत् पयः॥ ८१॥
पेयां वा त्रिवृतः शाकं मण्डूक्या वास्तुकस्य वा।
कालशाकं यवाख्यं वा खादेत् स्वरससाधितम्॥ ८२॥
निरम्ललवणस्नेहं स्विन्नास्विन्नमनन्नभुक्।
मासमेकं ततश्चैवं तृषितः स्वरसं पिबेत्॥ ८३॥
एवं विनिर्हृते शाकैर्दोषे मासात् परं ततः।
दुर्बलाय प्रयुञ्जीत प्राणभृत् कारभं पयः॥ ८४॥
प्लीहोदरे यथादोषं स्निग्धस्य स्वेदितस्य च।
शिरां भुक्तवतो दध्ना वामबाहौ विमोचयेत्॥ ८५॥
लब्धे बले च भूयोऽपि स्नेहपीतं विशोधितम्।
समुद्रशुक्तिजं क्षारं पयसा पाययेत्तथा॥ ८६॥
अम्लसृतं विड़कणाचूर्णाढ्यं नक्तमालजम्।
सोभाञ्जनस्य वा क्वाथं सैन्धवाग्निकणान्वितम्॥८७॥
हिङ्ग्वादिचूर्णं क्षाराज्यं युञ्जीत च यथाबलम्।
पिप्पली नागरं दन्ती समांशं द्विगुणाभयम्॥ ८८॥
विड़ाङ्गांशयुतं चूर्णमिदमुष्णाम्बुना पिबेत्।
विड़ङ्गं चित्रकं सक्तून् सघृतान् सैन्धवं वचाम्।
दग्ध्वा कपाले पयसा गुल्मप्लीहापहं पिबेत्॥८९॥
तैलोन्मिश्रैर्बदरकपत्रैः संमर्दितैः समुपनद्धः।

मुषलेन पीड़ितोऽनु याति प्लीहा पयोभुजो नाशम् ॥९०॥
रोहीतकलताः कृत्वाः खण्डशः साभयाजले ॥९१॥
मूत्रे वाऽप्यनुयात्तत्तु सप्तरात्रस्थितं पिबेत्।
कामला प्लीहगुल्मार्शः कृमिमेहोदरापहम् ॥ ९२ ॥
रोहीतकत्वचः कृत्वा पलानां पञ्चविंशतिम्।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥ ९३ ॥
पालिकैः पञ्चकोलैस्तु तैः समस्तैश्च तुल्यया।
हरीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥ ९४ ॥
प्लीहाभिवृद्धिं शमयत्येतदाशु प्रयोजितम्।
कदल्यास्तिलनालानां क्षारेण क्षुरकस्य च ॥ ९५ ॥
तैलं पक्वं जयेत्पानात् प्लीहानं कफवातजम्।
यथान्तौ गुल्मविधिना योजयेदग्निकर्म च ॥ ९६ ॥
अप्राप्तपिच्छासलिले प्लीह्नि वातकफोल्वणे।
पैत्तिके जीवनीयानि सर्पींषि क्षीरवस्तयः ॥ ९७ ॥
रक्तावसेकः संशुद्धिः क्षीरपानं च शस्यते।
यकृति प्लीहवत्कर्म दक्षिणे तु भुजे शिराम् ॥ ९८ ॥
स्विन्नाय बद्धोदरिणे मूत्रतीक्ष्णौषधान्वितम्।
सतैलं लवणं दद्यान्निरूहं सानुवासनम् ॥ ९९ ॥
परिस्रंसीनि चान्नानि तीक्ष्णं चास्मै विरेचनम्।
उदावर्त्तहरं कर्म कार्य्यं यच्चानिलापहम् ॥ १०० ॥
छिद्रोदरमृते स्वेदात् श्लेष्मोदरवदाचरेत्।
जातं जातं जलं स्राव्यमेवं तद्यापयेद्भिषक् ॥ १०१ ॥
अपां दोषहराण्यादौ योजयेदुदकोदरे।
मूत्रयुक्तानि तीक्ष्णानि विविधक्षारवन्ति च ॥ १०२ ॥
दीपनीयैः कफघ्नैश्च तमाहारैरुपाचरेत्।
क्षारं छागकरीषाणां स्रुतं मूत्रेऽग्निना पचेत् ॥ १०३ ॥

घनीभवति तस्मिंश्च कर्षांशं चूर्णितं क्षिपेत्।
पिप्पलीपिप्पलीमूलं शुण्ठीलवणपञ्चकम् ॥ १०४ ॥
निकुम्भकुम्भत्रिफलास्वर्णक्षीरीविषाणिकाः।
स्वर्जिकाक्षारषड्ग्रन्थासातलायवशूकजम् ॥ १०५ ॥
कोलाभा गुटिकाः कृत्वा ततः सौवीरकाप्लुताः।
पिबेदजरके शोफे प्रवृद्धे चोदकोदरे ॥ १०६ ॥
इत्यौषधैरप्रशमे त्रिषु बद्धोदरादिषु।
प्रयुञ्जीत भिषक् शस्त्रमार्त्तबन्धुनृपार्थितः ॥ १०७ ॥
स्निग्धस्विन्नतनोर्नाभेरधोबद्धक्षतान्त्रयोः।
पाटयेदुदरं मुक्त्वा वामतश्चतुरङ्गुलात् ॥ १०८ ॥
चतुरङ्गुलमानं तु निष्कास्यान्त्राणि तेन च।
निरीक्ष्यापनयेद् बालमललेपोपलादिकम् ॥ १०९ ॥
छिद्रे तु शल्यमुद्धृत्य विशोध्यान्त्रं परिस्रवम्।
मर्कोटैर्दंशयेच्छिद्रं तेषु लग्नेषु चाहरेत् ॥ ११० ॥
कार्य्यं मूर्द्धोऽनु चान्त्राणि यथास्थानं निवेशयेत्।
अक्तानि मधुसर्पिर्भ्यामथ सीव्येद् बहिर्व्रणम् ॥ १११ ॥
ततः कृष्णमृदालिप्य बध्नीयाद् यष्टिमिश्रया।
निवातस्थः पयोवृत्तिः स्नेहद्रोण्यां वसेत्ततः ॥ ११२ ॥
सजले जठरे तैलैरभ्यक्तस्यानिलापहैः।
स्विन्नस्योष्णाम्बुना कक्षमुदरे परिवेष्टिते ॥ ११३ ॥
बद्धच्छिद्रोदितस्थाने विध्येदङ्गुलमात्रकम्।
निधाय तस्मिन्नाड़ीं च स्रावयेदर्द्धमम्भसः ॥ ११४ ॥
अथास्य नाड़ीमाकृष्य तैलेन लवणेन च।
व्रणमभ्यज्य बद्धा च वेष्टयेद्वाससोदरम् ॥ ११५ ॥
तृतीयेऽह्नि चतुर्थे वा यावदाषोड़शं दिनम्।
तस्य विस्रंस्य विस्रंस्य स्रावयेदल्पशो जलम् ॥ ११६ ॥

विवेष्टयेद्गाढ़तरं जठरं च यथायथम् ।
निःस्रुते लङ्घितः पेयामस्नेहलवणां पिबेत् ॥ ११७ ॥
अतः परं षण्मासांस्त्रीन् पेयां पयसा पिबेत् ।
त्रींश्चान्यान् पयसैवाद्यात् फलाम्लेन रसेन वा ॥ ११८ ॥
अल्पशः स्नेहलवणं जीर्णं श्यामाककोद्रवम् ।
प्रयतो वत्सरेणैवं विजयेत् तज्जलोदरम् ॥ ११९ ॥
वर्ज्येषु यन्त्रितो दिष्टे नात्यदिष्टे जितेन्द्रियः ।
सर्वमेवोदरं प्रायो दोषसङ्घातजं यतः ॥ १२० ॥
अतो वातादिशमनी क्रिया सर्वा प्रशस्यते ।
वह्निर्मन्दत्वमायाति दोषैः कुक्षौ प्रपूरिते ॥ १२१ ॥
तस्माद्भोज्यानि भोज्यानि दीपनानि लघूनि च ।
सपञ्चमूलान्यल्पाम्लपटुस्नेहकटूनि च ॥ १२२ ॥
भावितानां गवां मूत्रे षष्टिकानां च तण्डुलैः ।
यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरम् ॥ १२३ ॥
पिबेदिक्षुरसं चानु जठराणां निवृत्तये ।
स्वं स्वं स्थानं व्रजन्त्येषां वातपित्तकफास्तथा ॥ १२४ ॥
अत्यर्थोष्णाम्ललवणं रूक्षं ग्राहि हिमं गुरु ।
गुडं तैलकृतं शाकं वारिपानावगाहयोः ॥ १२५ ॥
आयासाध्वदिवास्वप्नयानानि च परित्यजेत् ।
नात्यर्थसान्द्रं मधुरं तक्रं पाने प्रशस्यते ॥ १२६ ॥
सकणालवणं वाते पित्ते सोषणशर्करम् ।
यवानीसैन्धवाजाजीमधुव्योषैः कफोदरे ॥ १२७ ॥
त्र्यूषणक्षारलवणैः संयुतं निचयोदरे ।
मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ॥ १२८ ॥
प्लीह्नि बद्धे तु ह्पुषायवानीपटुजादिभिः ।
सकृष्णा माक्षिकं छिद्रे व्योषवत् सलिलोदरे ॥ १२९ ॥

गौरवारोचकानाहमन्दवह्न्यतिसारिणाम्।
तक्रं वातकफार्त्तानाममृतत्वाय कल्पते॥ १३०॥
प्रयोगाणां च सर्वेषामनुक्षीरं प्रयोजयेत्।
स्थैर्य्यकृत् सर्वधातूनां बल्यं दोषानुबन्धहृत्।
भेषजोपचिताङ्गानां क्षीरमेवामृतायते॥ १३१॥

---

## षोड़शोऽध्यायः।

अथातः पाण्डुरोगचिकित्सितं व्याख्यास्यामः॥
पाण्ड्वामयी पिबेत् सर्पिरादौ कल्याणकाह्वयम्।
पञ्चगव्यं महातिक्तं घृतं वाऽऽरग्वधादिना॥ १॥
दाड़िमात् कुड़वो धान्यात् कुड़वार्द्धं पलं पलम्।
चित्रकाच्छृङ्गवेराच्च पिप्पल्यर्द्धपलं च तैः॥ २॥
कल्कितैर्विंशतिपलं घृतस्य सलिलाढ़के।
सिद्धं हृत्पाण्डुगुल्मार्शःप्लीहवातकफार्त्तिनुत्॥ ३॥
दीपनं श्वासकासघ्नं मूढ़वातानुलोमनम्।
दुःखप्रसविनीनां च वन्ध्यानां च प्रशस्यते॥ ४॥
स्नेहितं वामयेत्तीक्ष्णैः पुनः स्निग्धं च शोधयेत्।
पयसा मूत्रयुक्तेन बहुशः केवलेन वा॥ ५॥
दन्तीपलरसे कोष्णे काश्मर्य्याञ्जलिमासुतम्।
द्राक्षाञ्जलिं वा मृदितं तत् पिबेत् पाण्डुरोगजित्॥६॥
मूत्रेण पिष्टां पथ्यां वा तत्सिद्धं वा फलत्रयम्।
स्वर्णक्षीरीत्रिवृच्छ्यामाभद्रदारुमहौषधम्॥ ७॥
गोमूत्राञ्जलिना पिष्टं शृतं तेनैव वा पिबेत्।
साधितं क्षीरमेभिर्वा पिबेद्दोषानुलोमनम्॥ ८॥
मूत्रे स्थितं वा सप्ताहं पयसाऽयोरजः पिबेत्।
जीर्णे क्षीरेण भुञ्जीत रसेन मधुरेण वा॥ ९॥

शङ्खयोभयतो लिह्यात् पथ्यां मधुघृतद्रुताम् ।
विशालां कटुकां मुस्तां कुष्ठं दारुकलिङ्गकः ॥ १० ॥
कर्षांशाद्विपिचुर्मूर्वा कर्षार्द्धांशा घुणप्रिया ।
पीत्वा तच्चूर्णमम्भोभिः सुखैर्लिह्यात् ततो मधु ॥ ११ ॥
पाण्डुरोगं ज्वरं दाहं कासं श्वासमरोचकम् ।
गुल्मानाहामवातांश्च रक्तपित्तं च तज्जयेत् ॥ १२ ॥
वासागुडूचीत्रिफलाकट्वीभूनिम्बनिम्बजः ।
क्वाथः चौद्रयुतो हन्ति पाण्डुपित्तास्रकामलाः ॥ १३ ॥
व्योषाग्निवेल्लत्रिफलामुस्तैस्तुल्यमयोरजः ।
चूर्णितं तक्रमध्वाज्यकोष्णाम्भोभिः प्रयोजितम् ॥१४॥
कामलापाण्डुहृद्रोगकुष्ठार्शोमेहनाशनम् ।
गुड़नागरमण्डूरतिलांशान्मानतः समान् ॥ १५ ॥
पिप्पलीद्विगुणान् दद्याद् गुटिकां पाण्डुरोगिणे ।
ताप्यं दार्व्यास्त्वचं चव्यं ग्रन्थिकं देवदारु च ॥१६॥
व्योषादि नवकं चैतच्चूर्णयेद् द्विगुणं ततः ।
मण्डूरं चाञ्जननिभं सर्वतोऽष्टगुणेऽथ तत् ॥ १७ ॥
पृथग् विपक्के गोमूत्रे वटकीकरणक्षमे ।
प्रक्षिप्य वटकान् कुर्य्यात् तान् खादेत्तक्रभोजनः ॥१८॥
एते मण्डूरवटकाः प्राणदाः पाण्डुरोगिणाम् ।
कुष्ठान्यजरकं शोफमूरुस्तम्भमरोचकम् ॥ १९ ॥
अर्शांसि कामलां मेहान् प्लीहानं शमयन्ति च ।
ताप्याद्रिजतुरौप्यायोमलाः पञ्चपलाः पृथक् ॥ २० ॥
चित्रकत्रिफलाव्योषविड़ङ्गैः पालिकैः सह ।
शर्कराष्टपलोन्मिश्राश्चूर्णिता मधुना द्रुताः ॥ २१ ॥
पाण्डुरोगं विषं कासं यक्ष्माणं विषमं ज्वरम् ।
कुष्ठान्यजरकं मेहं शोफं श्वासमरोचकम् ॥ २२ ॥

विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च।
कौटजत्रिफलानिम्बपटोलघननागरैः॥ २३॥
भावितानि दशाहानि रसैर्द्वित्रिगुणानि वा।
शिलाजतुपलान्यष्टौ तावती सितशर्करा॥ २४॥
त्वक्क्षीरीपिप्पलीधात्रीकर्कटाख्याः पलोन्मिताः।
निर्दग्धाः फलमूलाभ्यां पचं युक्त्वा त्रिजातकम्॥२५॥
मधु त्रिपलसंयुक्तं कुर्य्यादक्षसमान् गुड़ान्।
दाड़िमाम्बुपयःपक्षिरसतोयसुरासवान्॥ २६॥
तान् भक्षयित्वानुपिबेन्निरन्नो भुक्त एव वा।
पाण्डुकुष्ठज्वरप्लीहतमकार्शोभगन्दरम्॥ २७॥
हृन्मूत्रपूतीशुक्राग्निदोषशोषगरोदरम्।
कासासृग्दरपित्तासृक्शोफगुल्मगलामयान्॥ २८॥
मेहवर्ध्म भ्रमान् हन्युः सर्वदोषहराः शिवाः।
द्राक्षाप्रस्थं कणाप्रस्थं शर्करार्द्धतुलां तथा॥ २९॥
द्विपलं मधुकं शुण्ठीत्वक्क्षीरीं च विचूर्णितम्।
धात्रीफलरसे द्रोणे तत् क्षिप्त्वा लेहवत्पचेत्॥ ३०॥
शीतान्मधुप्रस्थयुतान् लिह्यात् पाणितलं ततः।
हलीमकं पाण्डुरोगं कामलाञ्च नियच्छति॥ ३१॥
कनीयः पञ्चमूलाम्बु शस्यते पानभोजने।
पाण्डूनां कामलार्त्तानां मृद्वीकामलकाद्रसः॥ ३२॥
इति सामान्यतः प्रोक्तं पाण्डुरोगभिषग्जितम्।
विकल्प्य योज्यं विदुषा पृथग्दोषबलं प्रति॥ ३३॥
स्नेहप्रायं पवनजे तिक्तशीतन्तु पैत्तिके।
श्लैष्मिके कटुरूक्षोष्णं विमिश्रं सान्निपातिके॥ ३४॥
मृदं निर्यातयेत् कायात्तीक्ष्णैः संशोधनैः पुरः।
बलाधानानि सर्पींषि शुद्धे कोष्ठे तु योजयेत्॥ ३५॥

व्योषविल्वद्विरजनीत्रिफलाद्विपुनर्नवम् ।
मुस्ताभ्ययोरजः पाठा विडङ्गं देवदारु च ॥ ३६ ॥
वृश्चिकाली च भार्ङ्गी च सक्षीरैस्तैः शृतं घृतम् ।
सर्वान् प्रशमयत्याशु विकारान्मृत्तिकाकृतान् ॥ ३७ ॥
तद्वत् केसरयष्ट्याह्वपिप्पलीक्षीरशाड्वलैः ।
मृद्भक्षणाय तल्लोल्ये वितरेद्भाविता मृदम् ॥ ३८ ॥
वेल्लाग्निनिम्बप्रसवैः पाठया मूर्वयाथवा ।
दृष्ट्वेदभिन्नदोषानुगमाद्योज्यं च भेषजम् ॥ ३९ ॥
कामलायां तु पित्तघ्नं पाण्डुरोगाविरोधि यत् ।
पथ्याशतरसे पथ्यावृन्ताद्धशतकल्कितः ॥ ४० ॥
प्रस्थः सिद्धो घृताद्गुल्मकामलापाण्डुरोगनुत् ।
आरग्वधं रसेनेक्षोर्विदार्य्यामलकस्य वा ॥ ४१ ॥
सत्र्यूषणं विल्वमात्रं पाययेत् कामलापहम् ।
पिवेन्निकुम्भकल्कं वा द्विगुणं शीतवारिणा ॥ ४२ ॥
कुम्भस्य चूर्णं सक्षौद्रं त्रैफलेन रसेन वा ।
त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसम् ॥४३॥
प्रातः प्रातर्मधुयुतं कामलार्त्ताय योजयेत् ।
निशागैरिकधात्रीभिः कामलापहमञ्जनम् ॥ ४४ ॥
तिलपिष्टनिभं यस्तु कामलावान् सृजेन्मलम् ।
कफरुद्धपथं तस्य पित्तं कफहरैर्जयेत् ॥ ४५ ॥
रूक्षशीतगुरुस्वादुव्यायामबलनिग्रहैः ।
कफसंमूर्च्छितो वायुर्यदा पित्तं वहिः क्षिपेत् ॥ ४६ ॥
हारिद्रनेत्रमूत्रत्वक्श्वेतवर्चास्तदा नरः ।
भवेत् साटोपविष्टम्भो गुरुणा हृदयेन च ॥ ४७ ॥
दौर्बल्याल्पाग्निपार्श्वार्त्तिहिध्माश्वासारुचिज्वरैः ।
क्रमेणाल्पेऽनुषज्ये त पित्ते शाखासमाश्रिते ॥ ४८ ॥

रसैस्तं रूचकट्वम्लैः शिखितित्तिरिदत्तजैः ।
शुष्कमूलकजैर्यूषैः कुलत्थोत्थैश्च भोजयेत् ॥ ४९ ॥
भृशाम्लतीक्ष्णकटुकलवणोष्णञ्च शस्यते ।
सबीजपूरकरसं लिह्याद् व्योषं तथाशयम् ॥ ५० ॥
स्वं पित्तमेति तेनास्य शकृदप्यनुरज्यते ।
वायुश्च याति प्रशमं सहाटोपाद्युपद्रवैः ॥ ५१ ॥
निवृत्तोपद्रवस्यास्य कार्य्यः कामलिको विधिः ।
गोमूत्रेण पिबेत् कुम्भकामलायां शिलाजतु ॥ ५२ ॥
मासं माक्षिकधातुं वा किट्टं चाय्यहिरण्यजम् ।
गुडूचीस्वरसक्षीरसाधितेन हलीमकी ॥ ५३ ॥
महिषीहविषा स्निग्धः पिबेद्धात्रीरसेन तु ।
त्रिवृतां तद्विरिक्तोऽद्यात् स्वादु पित्तानिलापहम् ॥५४॥
द्राक्षालेहञ्च पूर्वोक्तं सर्पींषि मधुराणि च ।
यापनान् क्षीरवस्तींश्च शीलयेत् सानुवासनान् ॥ ५५ ॥
मार्द्वीकारिष्टयोगांश्च पिबेद्युक्त्याग्निवृद्धये ।
कासिकं वाभयालेहं पिप्पलीमधुकं बलाम् ॥ ५६ ॥
पयसा च प्रयुञ्जीत यथादोषं यथाबलम् ।
पाण्डुरोगेषु कुशलः शोफोक्ताञ्च क्रियाक्रमम् ॥ ५७ ॥

---

## सप्तदशोऽध्यायः ।

अथातः श्वयथुचिकित्सितं व्याख्यास्यामः ॥

सर्वत्र सर्वाङ्गसरे दोषजे श्वयथौ पुरा ।
सामे विशोषितो भुक्त्वा लघुकोष्णाम्भसा पिबेत् ॥ १ ॥
नागरातिविषादारुविडङ्गेन्द्रयवोषणम् ।
अथवा विजयाशुण्ठीदेवदारुपुनर्नवम् ॥ २ ॥
नवायसं वा दोषाढ्यः शुद्धैः मूत्रहरीतकीः ।

वराक्वाथेन कटुकाकुम्भायस्यूषणानि वा ॥ ३ ॥
अथवा गुग्गुलुं तद्वज्जतु वा शैलसम्भवम् ।
मन्दाग्निः शीलयेदामगुरुभिन्नविबद्धविट् ॥ ४ ॥
तक्रं सौवर्चलव्योषचौद्रयुक्तं गुड़ाभयम् ।
तक्रानुपानमथवा तद्वद्वा गुड़नागरम् ॥ ५ ॥
आर्द्रकं वा समगुड़ं प्रकुञ्चार्द्धविवर्द्धितम् ।
परं पञ्चपलं मासं यूषचीररसाशनः ॥ ६ ॥
शोदरार्शःश्वयथुप्रमेहान् श्वासप्रतिश्यालसकाविपाकान् ।
कामलाशोफमनोविकारान् कासं कफञ्चैव जयेत्प्रयोगः ॥७॥
समार्द्रकनागरस्य कल्कस्वरसाभ्यां पयसा च साधयित्वा ।
श्वयथुच्चयूदराग्निसादैरभिभूतोऽपि पिबन् भवेत्यरोगः ॥ ८ ॥
निरामो बद्धशमलः पिबेच्छ्वयथुपीड़ितः ।
त्रिकटुत्रिवृतादन्तीचित्रकैः साधितं पयः ॥ ९ ॥
मूत्रं गोर्वा महिष्या वा सचीरं चीरभोजनः ।
सप्ताहं मासमथवा स्यादुष्ट्रीचीरवर्त्तनः ॥ १० ॥
यवानकं यवचारं यवानीं पञ्चकोलकम् ।
मरिचं दाड़िमं पाठां धानकामम्लवेतसम् ॥ ११ ॥
बालविल्वञ्च कर्षांशं साधयेत् सलिलाढ़के ।
तेन पक्को घृतप्रस्थः शोफार्शोगुल्ममेहहा ॥ १२ ॥
दशषिलकगर्भाद्वा घृतं तत्तक्रसंयुतम् ।
पक्कं सचित्रकं तद्वद् गुणैर्युञ्ज्याच्च कालवित् ॥ १३ ॥
धान्वन्तरं महातिक्तं कल्याणमभयाघृतम् ।
दशमूलकषायस्य कंसे पथ्याशतं पचेत् ॥ १४ ॥
दत्त्वा गुड़तुलां तस्मिन् लेहे दद्याद्विचूर्णितम् ।
त्रिजातकं त्रिकटुकं किञ्चिच्च यवशूकजम् ।
प्रस्थार्द्धञ्च हिमे चौद्रात्तं निहन्त्युपयोजितम् ॥ १५ ॥

प्रवृद्धशोफज्वरमेहगुल्मकार्श्यामवातात्म्लकरक्तपित्तम्।
वैवर्ण्यमूत्रानिलशुक्रदोषश्वासारुचिप्लीहगरोदरञ्च ॥ १६ ॥

पुराणयवशाल्यन्नं दशमूलाम्बुसाधितम्।
अल्पमल्पं पटुस्नेहं भोजनं श्वयथोर्हितम् ॥ १७ ॥
चारव्योषान्वितैर्मौद्गैः कौलत्थैः सकणैः रसैः।
तथा जाङ्गलजैः कूर्मगोधाशल्यकजैरपि ॥ १८ ॥
अनम्लं मथितं पाने मद्यान्यौषधवन्ति च।
अजाजीशठीजीवन्ती कारवी पौष्कराग्निकैः ॥ १९ ॥
विल्वमध्ययवक्षारवृक्षाम्लैर्बदरोन्मितैः।
कृता पेयाऽऽज्यतैलाभ्यां युक्तिभृष्टा परं हिता ॥ २० ॥
शोफातिसारहृद्रोगगुल्मार्शोऽल्पाग्निमेहिनाम्।
गुणैस्तद्वच्च पाठायाः पञ्चकोलेन साधिता ॥ २१ ॥
शैलेयकुष्ठे स्थौणेयरेणुकागुरुपद्मकैः।
श्रीवेष्टकनखस्पृक्कादेवदारुप्रियङ्गुभिः ॥ २२ ॥
मांसी मागधिका वन्यधान्यध्यामकवालकैः।
चतुर्जातकतालीसमुस्तागन्धपलाशकैः ॥ २३ ॥
कुर्यादभ्यञ्जनं तैलं लेपं स्नानाय तूदकम्।
स्नानं वा निम्बवर्षाभूनक्तमालार्कवारिणा ॥ २४ ॥
एकाङ्गशोफे वर्षाभूकरवीरककिंशुकैः।
विशालात्रिफलारोध्रनलिकादेवदारुभिः ॥ २५ ॥
हिंस्राकोशातकीमाद्रीतालपर्णीजयन्तिभिः।
स्थूलकाकादनीशालनाकुलीवृषपर्णीभिः ॥ २६ ॥
वृद्धिर्विहस्तिकर्णैश्च सुखोष्णैर्लेपनं हितम्।
अथानिलोत्थे श्वयथौ मासार्द्धं त्रिवृतं पिबेत् ॥ २७ ॥
तैलमैरण्डजं वातविड्विबन्धे तदेव तु।
प्राग्भक्तं पयसा युक्तं रसैर्वा कारयेत् तथा ॥ २८ ॥

स्वेदाभ्यङ्गान् समीरघ्नान् लेपमेकाङ्गगे पुनः ।
मातुलुङ्गाग्निमन्थेन शुण्ठीहिंस्रामराह्वयैः ॥ २९ ॥
पैत्ते तिक्तं पिबेत् सर्पिर्न्यग्रोधाद्येन वा शृतम् ।
क्षीरं तृड्दाहमोहेषु लेपाभ्यङ्गाश्च शीतलाः ॥ ३० ॥
पटोलमूलत्रायन्तीयष्ट्याह्वकटुकाभयाः ।
दारुदार्वीहिमं दन्ती विशाला निचुलं कणा ॥ ३१ ॥
तैः क्वाथः सघृतः पीतो हन्त्यन्तस्तापतृड्भ्रमान् ।
ससन्निपातवीसर्पशोफदाहविषज्वरान् ॥ ३२ ॥
आरग्वधादिना सिद्धं तैलं श्ले ष्मोद्भवे पिबेत् ।
स्रोतोविबन्धे मन्देऽग्नावरुचौ स्तिमिताशयः ॥ ३३ ॥
क्षारचूर्णासवारिष्टमूत्रतक्राणि शीलयेत् ।
कृष्णापुराणपिण्याकशिग्रुत्वक्सिकतातसीः ॥ ३४ ॥
प्रलेपोन्मर्दने युञ्ज्यात् सुखोष्णा मूत्रकल्किताः ।
स्नानं मूत्राम्भसि सिद्धे कुष्ठतर्कारिचित्रकैः ॥ ३५ ॥
कुलत्थनागराभ्यां वा चण्डागुरुविलेपने ।
कालाजशृङ्गीसरलवस्तगन्धाह्वयाह्वयाः ॥ ३६ ॥
एकैषिका च लेपः स्यात् श्वयथावेकगात्रजे ।
यथादोषं यथासन्नं शुद्धिं रक्तावसेचनम् ।
कुर्वीत मिश्रदोषे तु दोषोद्रेकबलात् क्रियाम् ॥ ३७ ॥
[illegible]ाजिपाठाघनपञ्चकोलव्याघ्रीरजन्यः सुखतोयपीताः ।
[illegible]तं त्रिदोषं चिरजं प्रवृद्धं निघ्नन्ति भूनिम्बमहौषधैश्च ॥३८॥
[illegible]ताद्वितयं सिवाटिका सुरकाष्ठं सपुरं सगोजलम् ।
[illegible]थूदरकुष्ठपाण्डुताक्रिमिमेहोर्द्धकफानिलापहम् ॥ ३९ ॥
[illegible] निजमधिकृत्य पथ्यमुक्तं क्षतजनिते क्षतजं विशोधनीयम् ।
[illegible]रहिमघृतलेपसेकरेकैर्विषजनिते विषजिच्च शोफ इष्टम्॥४०॥
ग्राम्यानूपं पिशितमबलं शुष्कशाकं तिलान्नं

गौड़ं पिष्टान्नं दधि सलवणं विज्जलं मद्यमम्लम्।
धानावल्लूरसमशमनमथो गुर्वसात्म्यं विदाहि
स्वप्नं रात्रौ स्वयथुगदवान् वर्जयेन्मैथुनं च ॥ ४१ ॥

---

# अष्टादशोऽध्यायः।

अथातो विसर्पचिकित्सितं व्याख्यास्यामः ॥

आदावेव विसर्पेषु हितं लङ्घनरूक्षणम्।
रक्तावसेको वमनं विरेकः स्नेहनं न तु ॥ १ ॥
प्रच्छर्दनं विसर्पघ्नं सयष्टीन्द्रयवं फलम्।
पटोलपिप्पलीनिम्बपल्लवैर्वा समन्वितम् ॥ २ ॥
रसेन युक्तं त्रायन्त्या द्राक्षायास्त्रैफलेन वा।
विरेचनं त्रिवृच्चूर्णं पयसा सर्पिषाऽथवा ॥ ३ ॥
योज्यं कोष्ठगते दोषे विशेषेण विशोधनम् ॥
अविशोध्यस्य दोषेऽल्पे शमनं चन्दनोत्पलम् ॥ ४ ॥
मस्तुनिम्बपटोलं वा पटोलादिकमेव वा।
सारिवामलकोशीरमुस्तं वा क्वथितं जले ॥ ५ ॥
दुरालभां पर्पटकं गुडूचीं विश्वभेषजम्।
पाक्यं शीतकषायं वा तृष्णावीसर्पवान् पिबेत् ॥ ६ ॥
दार्वीपटोलकटुकामसूरत्रिफलास्तथा।
सनिम्बयष्टीत्रायन्त्यः क्वथिता घृतमूर्च्छिताः ॥ ७ ॥
शाखादुष्टे तु रुधिरे रक्तमेवादितो हरेत्।
त्वग्मांसस्नायुसंक्लेदो रक्तक्लेदाद्धि जायते ॥ ८ ॥
निरामे श्लेष्मणि क्षीणे वातपित्तोत्तरे हितम्।
घृतं तिक्तं महातिक्तं शृतं वा त्रायमाणया ॥ ९ ॥
निर्हृतेऽस्रे विशुद्धेऽन्तर्दोषे त्वग्मांससन्धिगे।
बहिःक्रियाः प्रदेहाद्याः सद्यो वीसर्पशान्तये ॥ १० ॥

शताह्वामुस्तवाराहीवंशार्त्तगलधान्यकम्।
सुराह्वा कृष्णगन्धा च कुष्ठं वा लेपनं चले॥ ११॥
न्यग्रोधादिगणः पित्ते तथा पद्मोत्पलादिकम्।
न्यग्रोधपादास्तरुणाः कदलीगर्भसंयुताः॥ १२॥
विसग्रन्थिश्च लेपः स्यात् शतधौतघृताप्लुतः।
पद्मिनीकर्दमः शीतः पिष्टं मौक्तिकमेव वा॥ १३॥
शङ्खः प्रवालं शुक्तिर्वा गैरिकं वा घृतान्वितम्।
त्रिफलापद्मकोशीरसमङ्गाकरवीरकम्॥ १४॥
नलमूलान्यनन्ता च लेपः श्लेष्मविसर्पहा।
धवसप्ताह्वखदिरदेवदारुकुरण्टकम्॥ १५॥
समुस्तारग्वधं लेपो वर्गो वा वरुणादिकः।
आरग्वधस्य पत्राणि त्वचः श्लेष्मान्तकोद्भवाः॥ १६॥
इन्द्राणीशाकं काकाह्वाशिरीषकुसुमानि च।
सेकव्रणाभ्यङ्गहविर्लेपचूर्णान् यथायथम्॥ १७॥
एतैरेवौषधैः कुर्य्याद्दाये लेपा घृताधिकाः।
कफस्थानगते सामे पित्तस्थानगतेऽथवा॥ १८॥
आशीतोष्णा हिता रूक्षा रक्तपित्ते घृतान्विताः।
अत्यर्थशीतास्तनवस्तनुवस्त्रान्तरास्थिताः॥ १९॥
योज्याः क्षणे क्षणेऽन्येऽन्ये मन्दवीर्य्यास्त एव च।
संसृष्टदोषे संसृष्टमेतत् कर्म प्रशस्यते॥ २०॥
शतधौतघृतेनाग्निं प्रदिह्यात् केवलेन वा।
सेचयेद् घृतमण्डेन शीतेन मधुकाम्बुना॥ २१॥
शीताम्बुसाम्भोजजलैः क्षीरेणेक्षुरसेन वा।
पानलेपनसेकेषु महातिक्तं परं हितम्॥ २२॥
अन्याश्च रक्तपित्तघ्नं कृत्वा सम्यग् यथोदितम्।
कफानिलघ्नं कर्मेष्टं पिण्डस्वेदोपनाहनम्॥ २३॥

ग्रन्थिवीसर्पशूले तु तैलेनोष्णेन सेचयेत् ।
दशमूलविपक्वेन तद्वन्मूत्रैर्जलेन वा ॥ २४ ॥
सुखोष्णया प्रदिह्याद्वा पिष्टया कृष्णगन्धया ।
नक्तमालत्वचा शुष्कमूलकैः कलिनाऽथवा ॥ २५ ॥
दन्तीचित्रकमूलत्वक्सौधार्कपयसी गुड़ः ।
भल्लातकास्थिकासीसलेपो भिन्द्यात् शिलामपि ॥ २६ ॥
बहिर्मार्गाश्रितं ग्रन्थिं किं पुनः कफसम्भवम् ।
दीर्घकालस्थितं ग्रन्थिमेभिर्भिन्द्याच्च भेषजैः ॥ २७ ॥
मूलकानां कुलत्थानां यूषैः सक्षारदाड़िमैः ।
गोधूमान्नैर्यवान्नैश्च ससीधुमधुशर्करैः ॥ २८ ॥
सक्षौद्रैर्वारुणीमण्डैर्मातुलुङ्गरसान्वितैः ।
त्रिफलायाः प्रयोगैश्च पिप्पल्याः क्षौद्रसंयुतैः ॥ २९ ॥
देवदारुगुडूच्योश्च प्रयोगैर्गिरिजस्य च ।
मुस्तभल्लातसक्तूनां प्रयोगैर्माक्षिकस्य च ॥ ३० ॥
धूमैर्विरेकैः शिरसः पूर्वोक्तैर्गुल्मभेदनैः ।
तप्तायोहेमलवणपाषाणादिप्रपीड़नैः ॥ ३१ ॥
आभिः क्रियाभिः सिद्धाभिर्विविधाभिर्बले स्थितः ।
ग्रन्थिः पाषाणकठिनो यदि नैवोपशाम्यति ॥ ३२ ॥
अथास्य दाहः क्षारेण शरैर्हेम्नापि वा हितः ।
पाकिभिः पाचयित्वा तु पाटयित्वा तमुद्धरेत् ॥ ३३ ॥
मोक्षयेद्‌ बहुशश्चास्य रक्तमुत्क्लेशमागतम् ।
पुनश्चापहृते रक्ते वातश्लेष्मजिदौषधम् ॥ ३४ ॥
प्रक्लिन्ने दाहपाकाभ्यां बाह्यान्तर्व्रणवत् क्रिया ।
दार्वीविड़ङ्गकम्पिल्लैः सिद्धं तैलं व्रणे हितम् ॥ ३५ ॥
दूर्वास्वरससिद्धं तु कफपित्तोत्तरे घृतम् ।
एकतः सर्वकर्माणि रक्तमोक्षणमेकतः ॥ ३६ ॥

विसर्पो न ह्यसंसृष्टः सोऽस्रपित्तेन जायते।
रक्तमेवाश्रयश्चास्य बहुशोऽस्रं हरेदतः॥ ३७॥
न घृतं बहुदोषाय देयं यन्न विरेचनम्।
तेन दोषो ह्युपस्तब्धस्त्वग्रक्तपिशितं पचेत्॥ ३८॥

---

## एकोनविंशोऽध्यायः।

अथातः कुष्ठचिकित्सितं व्याख्यास्यामः॥
कुष्ठिनं स्नेहपानेन पूर्वं सर्वमुपाचरेत्।
तत्र वातोत्तरे तैलं घृतं वा साधितं हितम्॥ १॥
दशमूलामृतैरण्डशार्ङ्गेष्ठामेषशृङ्गिभिः।
पटोलनिम्बकटुकादार्वीपाठादुरालभाः॥ २॥
पर्पटं त्रायमाणाञ्च पलांशं पाचयेदपाम्।
द्वयाढकेऽष्टांशशेषेण तेन कर्षोन्मितैस्तथा॥ ३॥
त्रायन्तीमुस्तभूनिम्बकलिङ्गकणचन्दनैः।
सर्पिषो द्वादशपलं पचेत्तत्तिक्तकं जयेत्॥ ४॥
पित्तकुष्ठपरीसर्पपिटिकादाहतृड्भ्रमान्।
कण्डुपाण्ड्वामयान् गण्डान् दुष्टनाड़ीव्रणापचीः॥५॥
विस्फोटविद्रधीगुल्मशोफोन्मादमदानपि।
हृद्रोगतिमिरव्यङ्गग्रहणीश्वित्रकामलाः॥ ६॥
भगन्दरमपस्मारमुदरं प्रदरं गरम्।
अर्शोऽस्रपित्तमन्यांश्च सुकृच्छ्रान् पित्तजान् गदान्॥७॥
सप्तच्छदः पर्पटकः शम्याकः कटुका वचा।
त्रिफला पद्मकं पाठा रजन्यौ सारिवे कणे॥८॥
निम्बचन्दनयष्ट्याह्वविशालेन्द्रयवामृताः।
किराततिक्तकं सेव्यं वृषो मूर्वा शतावरी॥ ९॥
पटोलातिविषामुस्तात्रायन्तीधन्वयासकम्।

तैलेऽष्टगुणे सर्पिर्द्विगुणामलकीरसे ॥ १० ॥
सिद्धं तिक्ताम्महातिक्तं गुणैरभ्यधिकं मतम्।
कफोत्तरे घृतं सिद्धं निम्बसप्ताह्वचित्रकैः॥ ११ ॥
कुष्ठोषणवचाशालप्रियालचतुरङ्गुलैः।
सर्वेषु चारुष्करजं तौवरं सार्षपं पिबेत् ॥ १२ ॥
स्नेहं घृतं वा क्रमिजित्पथ्याभल्लातकैः शृतम्।
आरग्वधस्य मूलेन शतकृत्वः शृतं घृतम् ॥ १३ ॥
पिबन् कुष्ठं जयत्याशु भजन् सखदिरं जलम्।
एभिरेव यथास्वं च स्नेहैरभ्यञ्जनं हितम् ॥ १४ ॥
स्निग्धस्य शोधनं योज्यं विसर्पे यदुदाहृतम्।
ललाटहस्तपादेषु शिराश्चास्य विमोचयेत् ॥ १५ ॥
प्रच्छानमल्पके कुष्ठे शृङ्गाद्यांश्च यथायथम्।
स्नेहैराप्याययेच्चैनं कुष्ठघ्नै रन्तरान्तरा ॥ १६ ॥
मुक्तरक्तविरिक्तस्य रिक्तकोष्ठस्य कुष्ठिनः।
प्रभञ्जनस्तथा ह्यस्य न स्याद् देहप्रभञ्जनः ॥ १७ ॥
वासामृतानिम्बवरापटोलव्याघ्रीकरञ्जोदककल्कपक्वम्।
सर्पिर्विसर्पज्वरकामलास्रकुष्ठापहं वज्रकमामनन्ति ॥ १८ ॥
त्रिफलात्रिकटुद्विकण्टकारिकटुकाकुम्भनिकुम्भराजवृक्षैः।
सवचातिविषाग्निकैः सपाठैः पिचुभागैर्नववज्रदुग्धसुध्या ॥१९॥

पिष्टैः सिद्धं सर्पिषः प्रस्थमेभिः
क्रूरे कोष्ठे स्नेहनं रेचनं च।
कुष्ठश्वित्रप्लीहवर्ध्माश्मगुल्मान्
हन्यात् कृच्छ्रांस्तन्महावज्रकाख्यम् ॥ २० ॥

दन्त्याढकमपां द्रोणे पक्त्वा तेन घृतं पचेत्।
धामार्गवपले पीतं तदूर्ध्वाधो विशुद्धिकृत् ॥ २१ ॥
आवर्त्तकीतुलां द्रोणे पचेदष्टांशशेषितम्।

तन्मूलैस्तव निर्यूहे घृतप्रस्थं विपाचयेत् ॥ २२ ॥
पीत्वा तदेकदिवसान्तरितं सुजीर्णे
भुञ्जीत कोद्रवसुसंस्कृतकाञ्जिकेन।
कुष्ठं किलासमपचीञ्च विजेतुमिच्छन्
इच्छन् प्रजाञ्च विपुलां ग्रहणं स्मृतिञ्च ॥ २३ ॥
यतेर्लीलीतकवसा चौद्रजातोरसान्विता।
कुष्ठघ्नी समसर्पिर्वा सगायत्रासनोदका ॥ २४ ॥
शालयो यवगोधूमाः कोरदूषाः प्रियङ्गवाः।
मुद्गा मसूरास्तुवरी तिक्तशाकानि जाङ्गलम् ॥ २५ ॥
वरापटोलखदिरनिम्बारुष्करयोजितम्।
मद्यान्यौषधगर्भाणि मथितं चेक्षुराजिमत् ॥ २६ ॥
अन्नपानं हितं कुष्ठे न त्वम्ललवणोषणम्।
दधिदुग्धगुड़ानूपतिलमाषांस्त्यजेत्तराम् ॥ २७ ॥
टोलमूलत्रिफलाविशाला पृथक्त्रिभागाः पचिततिशाखाः।
गुस्त्रायमाणा कटुरोहिणी च भागार्द्धिके नागरपादयुक्ते ॥२८॥
ततूपलं जर्जरितं विपक्वं जले पिवेद् व्योषविशोधनाय।
र्णे रसैर्धन्वमृगद्विजानां पुराणशाल्योदनमाददीत ॥ २९ ॥
ष्ठं किलासं ग्रहणीप्रदोषमर्शांसि कृच्छ्राणि हलीमकञ्च।
ड्रात्रियोगेन निहन्ति चैतद् हृद्वस्तिशूलं विषमज्वरञ्च ॥३०॥
ड़ङ्गसारामलकाभयानां पलत्रयं त्रीणि पलानि कुम्भात्।
ड़स्य च द्वादशमासमेष जितात्मनां हन्त्युपयुज्यमानः ॥३१॥
ुष्ठं श्वित्रं श्वासकासोदरार्शोमेहप्लीहग्रन्थ्यरुक्जन्तुगुल्मान्।
द्धं योगं प्राह यच्चो मुमुक्षोर्भिक्षोः प्राणान्माणिभद्रः किलेमम्
॥ ३२ ॥
भूनिम्बनिम्बत्रिफलापद्मकातिविषाकयाः।
मूर्वापटोलीहरिनिशापाठातिक्तेन्द्रवारुणीः ॥ ३३ ॥

सकलिङ्गवचास्तुल्या द्विगुणाश्च यथोत्तरम्।
लिह्याद्दन्तीत्रिवृद्ब्राह्मीचूर्णिता मधुसर्पिषा ॥ ३४ ॥
कुष्ठमेहप्रसुप्तीनां परमं स्यात्तदौषधम्।
वराविडङ्गकृष्णा वा लिह्यात्तैलाज्यमाक्षिकैः ॥३५॥
काकोदुम्बरिकावेल्लनिम्बाब्दव्योषकल्कवान्।
हन्ति वृचकनिर्यूहः पानात्सर्वांस्त्वगामयान् ॥ ३६ ॥
कुटजाग्निनिम्बनृपतरुखदिरासनसप्तपर्णनिर्यूहे।
सिद्धा मधुघृतयुक्ताः कुष्ठघ्नीर्भक्षयेदभयाः ॥३७॥
दार्वीखदिरनिम्बानां त्वक्क्वाथः कुष्ठसूदनः ॥३८॥
निशोत्तमानिम्बपटोलमूलतिक्तावचालोहितयष्टिकाभिः।
कृतः कषायः कफपित्तकुष्ठं सुसेवितो धर्म इवोच्छिनत्ति ॥३
एभिरेव च शृतं घृतमुख्यं भेषजैर्जयति मारुतकुष्ठम्।
कल्पयेत् खदिरनिम्बगुडूचीदेवदारुरजनीः पृथगेवम् ॥ ४० ॥

पाठादार्वीवह्निघुणेष्टाकटुकाभि-
र्मूत्रं युक्तं शक्रयवैश्चोष्णजलं च।
कुष्ठी पीत्वा मासमरुक् स्याद् गुदकीली
मेही शोफी पाण्डुरजीर्णी कृमिमांश्च ॥ ४१ ॥

लाक्षादन्तीमधुरसवरादीपिपाठाविडङ्गं
प्रत्यक्पुष्पीत्रिकटुरजनीसप्तपर्णाटरूषम्।
रक्तानिम्बं सुरतरुकृतं पञ्चमूल्यौ च चूर्णं
पीत्वा मासं जयति हितभुग्गव्यमूत्रेण कुष्ठम् ॥ ४२ ॥

निशाकणानागरवेल्लतीवरं
सवह्निताप्यं क्रमशो विवर्द्धितम्।
गवाम्बु पीतं वटकीकृतं तथा
निहन्ति कुष्ठानि सुदारुणान्यपि ॥ ४३ ॥

त्रिकटूत्तमातिलारुष्कराज्यमाक्षिकसितोपला विहिता।

गुलिका रसायनं स्यात्कुष्ठजिच्च तथा च सप्तसमा ॥४४॥
चन्द्रशकलाग्निरजनीविड़ङ्गतुवरास्थ्यरुष्करत्रिफलाभिः ।
वटका गुड़ांशक्लृप्ताः समस्तकुष्ठानि नाशयन्त्यभ्यस्ताः ॥४५॥
ड़ङ्गभल्लातकवाकुचीनां सदीपिकाराहिहरीतकीनाम् ।
लाङ्गलीकृष्णतिलोपकुल्या गुड़ेन पिण्डी विनिहन्ति कुष्ठम्४६
शाङ्गलेखा सविड़ङ्गमूला सपिप्पलीका सहुताशमूला ।
शीमला सामलका सतैला कुष्ठानि कृच्छ्राणि निहन्ति लीढा ॥४७॥
पथ्यातिलगुड़ैः पिण्डी कुष्ठं सारुष्करैर्जयेत् ।
गुड़ारुष्करजन्तुघ्नसोमराजीकृताऽथवा ॥ ४८ ॥
विड़ङ्गाद्रिजतु चौद्रं सर्पिष्मत् खादिरं रजः ।
किटिभश्वित्रदद्रुघ्नं खादेन्मितहिताशनः ॥ ४९ ॥
सितातैलक्रमिघ्नानि धात्रायामलपिप्पलीः ।
लिहानः सर्वकुष्ठानि जयत्यतिगुरूण्यपि ॥ ५० ॥
मुस्तं व्योषं त्रिफला मञ्जिष्ठादारुपञ्चमूले द्वे ।
सप्तच्छदनिम्बत्वक् सविशालाचित्रको मूर्वा ॥ ५१ ॥
चूर्णं तर्पणभागैर्नवभिः संयोजितं समध्वंसम् ।
नित्यं कुष्ठनिवर्हणमेतत् प्रायोगिकं खादन् ॥ ५२ ॥
शयथुं सपाण्डुरोगं श्वित्रं ग्रहणीप्रदोषमर्शांसि ।
वध्नं भगन्दरपिड़काकण्डूकोठापचीर्हन्ति ॥ ५३ ॥
रसायनप्रयोगेण तुवरास्थीनि शीलयेत् ।
भल्लातकं वाकुचिकां वह्निमूलं शिलाह्वयम् ॥ ५४ ॥
दोषे विजितेऽन्तस्त्वक्स्थे शमनं बहिः प्रलेपादि हितम् ।
त्वालेपोत्क्लिष्टं कुष्ठं हि विवृद्धिमेति मलिने देहे ॥ ५५ ॥
स्थिरकठिनमण्डलानां कुष्ठानां पोटलैर्हितः स्वेदः ।
स्विन्नोत्सन्नं कुष्ठं शस्त्रैर्लिखितं प्रलेपनैर्लिम्पेत् ॥ ५६ ॥

येषु न शस्त्रं क्रमते स्पर्शेन्द्रियनाशनेषु कुष्ठेषु।
तेषु निपात्यः क्षारो रक्तं दोषं च विस्राव्यम् ॥ ५७ ॥
लेपोऽतिकठिने परुषे सुप्ते कुष्ठे स्थिरे पुराणे च।
पीतागदस्य कार्य्यो विषैः समन्त्रो गदैश्चानु ॥ ५८ ॥
स्तब्धातिसुप्तसुप्तान्यस्वेदनकुण्डलानि कुष्ठानि।
घृष्टानि शुष्कगोमयफेनकशस्त्रैः प्रदेह्यानि ॥ ५९ ॥
मुस्तात्रिफलामदनं करञ्ज आरग्वधकलिङ्गयवाः।
सप्ताह्वकुष्ठफलिनीदार्व्यसिद्धार्थकं स्नानम् ॥ ६० ॥
एष कषायो वमनं विरेचनं वर्णकरस्तथोद्वर्षः।
त्वग्दोषकुष्ठशोफप्रबोधनः पाण्डुरोगघ्नः ॥ ६१ ॥
करवीरनिम्बकुटजाच्छम्याकाचित्रकाश्च मूलानाम्।
मूत्रे दर्वीलेपीक्काथो लेपेन कुष्ठघ्नः ॥ ६२ ॥
श्वेतकरवीरमूलं कुटजकरञ्जात् फलं त्वचो दार्व्याः।
सुमनःप्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥ ६३ ॥
शैरिषीत्वक्पुष्पं कार्पास्याराजवृक्षपत्राणि।
पिष्टा च काकमाची चतुर्विधः कुष्ठहा लेपः ॥ ६४ ॥
व्योषसर्षपनिशागृहधूमैर्यावशूकपटुचित्रककुष्ठैः।
कोलमात्रगुटिकार्द्धविषांशाः श्वित्रकुष्ठहरणो वरलेपः ॥६५॥
निम्बं हरिद्रे सुरसं पटोलं कुष्ठाश्वगन्धे सुरदारुशिग्रुः।
ससर्षपं तुम्बरुधान्यवन्यं चण्डावचूर्णानि समानि कुर्य्यात् ६

तैस्तक्रपिष्टैः प्रथमं शरीरं
तैलाक्तमुद्वर्त्तयितुं यतेत।
तेनास्यकण्डूपिटिकाः सकोठाः
कुष्ठानि शोफाश्च शमं व्रजन्ति ॥ ६७॥

मुस्तामृतासङ्गकटङ्कटेरीकासीसकम्पिल्लककुष्ठरोध्राः।
गन्धोपलः सर्जरसो विडङ्गं मनःशिलालेकरवीरकत्वक् ॥६८

तैलात्तगात्रस्य कृतानि चूर्णा-
न्येतानि दद्यात्द्रवचूर्णनार्थम् ।
दद्रुः सकण्डूः किटिभानि पामा
विचर्चिका चेति तथा न सन्ति ॥ ६९ ॥

स्नुग्गण्डे सर्षपात् कल्कः कुकूलानलपाचितः ।
लेपाद्विचर्चिकां हन्ति रागवेग इव त्रपाम् ॥७०॥

मनःशिलालेमरिचानि तैलमार्कं पयः कुष्ठहरः प्रदेहः ।
तथा करञ्जप्रपुनाटवीजं कुष्ठान्वितं गोसलिलेन पिष्टम् ॥७१॥

गुग्गुलुमरिचविड़ङ्गैः सर्षपकासीससर्जरससुस्तैः ।
श्रीवेष्टकालगन्धैर्मनःशिलाकुष्ठकम्पिल्लैः ॥ ७२ ॥

उभयहरिद्रासहितैश्चाक्रिकतैलेन मिश्रितैरेभिः ।
दिनकरकराभितप्तैः कुष्ठं दृष्टञ्च नष्टञ्च ॥ ७३ ॥

मरिचं तमालपत्रं कुष्ठं समनःशिलं सकासीसम् ।
तैलेन युक्तसुषितं सप्ताहं भाजने ताम्रे ॥७४॥

तेनालिप्तं सिध्मसप्ताहाद् घर्मसेविनोऽपैति ।
मासान्नवं किलासं स्नानेन विना विशुद्धस्य ॥ ७५ ॥

मयूरकक्षारजले सप्तकृत्वः परिस्रुते ।
सिद्धं ज्योतिष्मतीतैलमभ्यङ्गात् सिध्मनाशनम् ॥७६॥

वायसजङ्घामूलं वमनोपत्राणि मूलकाद् वीजम् ।
तक्रेण भौमवारे लेपः सिध्मापहः सिद्धः ॥ ७७ ॥

जीवन्तीमञ्जिष्ठादार्वी कम्पिल्लकं पयस्तुत्थम् ।
एष घृततैलपाकः सिद्धः सिद्धे च सर्ज्जरसः ॥७८॥

देयः समधूच्छिष्टो विपादिका तेन नश्यति ह्युक्ता ।
चर्मैककुष्ठकिटिभं कुष्ठं शाम्यत्यलसकं च ॥ ७९ ॥

मूलं सप्ताह्वात्त्वक् शिरीषाश्वमारात्
अर्कान्मालत्याश्चित्रकास्फोतनिम्बात् ।

वीजं कारञ्जं सार्षपं प्रापुनाटं
श्रेष्ठा जन्तुघ्नं त्र्यूषणं द्वे हरिद्रे ॥ ८० ॥
तिलतैलं साधितं तैः समूत्रैः
त्वग्दोषाणां दुष्टनाड़ीव्रणानाम्।
अभ्यङ्गेन श्लेष्मवातोद्भवानां
नाशायालं वज्रकं वज्रतुल्यम् ॥ ८१ ॥
एरण्डतार्क्ष्यघननीपकदम्बभार्ङ्गी-
कम्पिल्लवेल्लफलिनीसुरवारुणीभिः।
निर्गुण्डरुष्करसुराह्वसुवर्णदुग्धा-
श्रीवेष्टगुग्गुलुशिलापटुतालविश्वैः ॥ ८२ ॥
तुल्यस्नुगर्कदुग्धं सिद्धं तैलं स्मृतं महावज्रम्।
अतिशयितवज्रकगुणं श्वित्रार्शोग्रन्थिमालाघ्नम् ॥ ८३ ॥
कुष्ठाश्वमारभृङ्गार्कमूत्रस्नुक्क्षीरसैन्धवैः।
तैलं सिद्धं विषावापमभ्यङ्गात् कुष्ठजित्परम् ॥ ८४ ॥
सिद्धं सिक्थकसिन्दूरपुरतुत्थकतार्क्ष्यजैः।
कच्छूं विचर्चिकां वाऽऽशु कटुतैलं नियच्छति ॥ ८५ ॥
लाक्षाव्योषं प्रापुनाटञ्च वीजं
सश्रीवेष्टं कुष्ठसिद्धार्थकाश्च।
तक्रोन्मिश्रः स्याद्धरिद्रा च लेपो
दद्रुघ्नो मूलकोत्थञ्च वीजम् ॥ ८६ ॥
चित्रकसोभाञ्जनकौ गुडूच्यपामार्गदेवदारूणि।
खदिरो धवश्च लेपः श्यामा दन्ती द्रवन्ती च ॥ ८७ ॥
लाक्षारसाञ्जनैलापुनर्नवा चेति कुष्ठिनां लेपाः।
दधिमण्डयुताः पादैः षट् प्रोक्ता मारुतकफघ्नाः ॥८८॥
जलवाप्यलोहकेसरपत्रप्लवचन्दनमृणालानि।
भागोत्तराणि सिद्धं प्रलेपनं पित्तकफकुष्ठे ॥ ८९ ॥

तिक्तघृतैर्धौतघृतैरभ्यङ्गो दह्यमानकुष्ठेषु।
तैलैश्चन्दनमधुकप्रपौण्डरीकोत्पलयुतैश्च ॥ ९० ॥
क्लेदे प्रपतति चाङ्गे दाहे विस्फोटके च चर्मदले।
शीताः प्रदेहसेका व्यधनविरेकौ घृतं तिक्तम् ॥ ९१ ॥
खदिरवृषनिम्बकुटजाः श्रेष्ठाः कृमिजित् पटोलमधुपर्ण्यः।
अन्तर्बहिः प्रयुक्ताः कृमिकुष्ठनुदः सगोमूत्राः ॥ ९२ ॥
वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु।
पित्तोत्तरेषु मोचो रक्तस्य विरेचनं चाग्र्यम् ॥ ९३ ॥
ये लेपाः कुष्ठानां युज्यन्ते निर्हृतास्रदोषाणाम्।
संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम् ॥ ९४ ॥
दोषे हृतेऽपनीते रक्ते बाह्यान्तरे कृते शमने।
स्नेहे च कालयुक्ते न कुष्ठमतिवर्त्तते साध्यम् ॥ ९५ ॥
बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान्।
दोषे ह्यतिमात्रहृते वायुर्हन्यादबलमाशु ॥ ९६ ॥

पक्षात् पक्षाच्छर्दनान्यभ्युपेयात्
मासान्मासाच्छोधनान्यप्यधस्तात्।
त्र्यहात्र्मूर्ध्नि स्यात् त्रिरात्रात् त्रिरात्रात्
षष्ठे षष्ठे मास्यसृग्मोक्षणानि ॥ ९७ ॥
यो दुर्वान्तो दुर्विरिक्तोऽथवा स्यात्
कुष्ठी दोषैरुद्धतैर्व्याप्यतेऽसौ।
निःसन्देहं यात्यसाध्यत्वमेवं
तस्मात् कृत्स्नान्निर्हरेदस्य दोषान् ॥ ९८ ॥
व्रतदमयमसेवात्यागशीलाभियोगः
द्विजसुरगुरुपूजा सर्वसत्त्वेषु मैत्री।
शिवाशिवसुततारामास्कराराधनानि
प्रकटितमलपापं कुष्ठमुन्मूलयन्ति ॥ ९९ ॥

## विंशोऽध्यायः ।

अथातः श्वित्रक्रिमिचिकित्सितं व्याख्यास्यामः ॥

कुष्ठादपि बीभत्सं यच्छीघ्रतरञ्च यात्यसाध्यत्वम् ।
श्वित्रमतस्तच्छान्त्यै यतेत दीप्ते यथा भवने ॥ १ ॥
संशोधनं विशेषात् प्रयोजयेत् पूर्वमेव देहस्य ।
श्वित्रे स्रंसनमग्र्यं मलयूरस इष्यते सगुडः ॥ २ ॥
तं पीत्वा भक्ततनुर्यथाबलं सूर्य्यपादसन्तापम् ।
सेवेत विरिक्ततनुस्त्र्यहं पिपासुः पिबेत् पेयाम् ॥ ३ ॥
श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान् भिन्द्यात् ।
स्फोटेषु निस्रुतेषु तु प्रातः प्रातः पिबेत् त्रिदिनम् ॥४॥
मलयमसनं प्रियङ्गुं शतपुष्पां चाम्भसा समुत्क्वाथ्य ।
पलाशं वा क्षारं यथाबलं फाणितोपेतम् ॥ ५ ॥
पल्वच्चवल्कलनिर्यूहेणेन्दुराजिकाकल्कम् ।
पीत्वोष्णस्थितस्य जाते स्फोटे तक्रेण भोजनं निर्लवणम् ॥६॥

गव्यं मूत्रं चित्रकव्योषयुक्तं
सर्पिः कुम्भे स्थापितं क्षौद्रमिश्रम् ।
पक्षादूर्ध्वं श्वित्रिभिः पेयमेतत्
कार्य्यं चास्मै कुष्ठदृष्टं विधानम् ॥ ७ ॥

मार्कमथवा खादेद् भृष्टं तैलेन लोहपात्रस्थम् ।
बीजकशृतञ्च दुग्धं तदनु पिबेच्छ्वित्रनाशाय ॥ ८ ॥

पूतीकार्कव्याधिघातस्नुहीनां
मूत्रे पिष्टाः पल्लवा जातिजाश्च ।
घ्नन्त्यालेपाच्छ्वित्रदुर्नामदद्रू-
पामाकोठान् दुष्टनाडीव्रणांश्च ॥ ९ ॥
द्वैपं दग्धं चर्म मातङ्गजं वा

श्वित्रे लेपस्तैलयुक्तो वरिष्ठः ।
पूतिः कीटो राजवृक्षोद्भवेन
क्षारेणाक्तः श्वित्रमेकोऽपि हन्ति ॥ १० ॥
रात्रौ गोमूत्रे वासितान् जर्जराङ्गान्
अह्नि छायायां शोषयेत् स्फोटहेतून् ।
एवं वारांस्त्रींस्तैस्ततः श्लक्ष्णपिष्टैः
स्नुह्या क्षीरेण श्वित्रनाशाय लेपः ॥ ११ ॥
अक्षतैलकृतो लेपः कृष्णसर्पोद्भवा मषी ।
शिखिपित्तं तथा दग्धं ह्रीवेरं वा तदाप्लुतम् ॥ १२ ॥
कुडवो वल्गुजबीजाद्धरितालचतुर्थभागसंमिश्रः ।
मूत्रेण गवां पिष्टः सवर्णकरणं परं श्वित्रे ॥ १३ ॥
ते सुदग्धे गजलिण्डजे च गजस्य मूत्रेण परिस्रुते च ।
णप्रमाणे दशभागयुक्तं दत्त्वा पचेद्बीजमवल्गुजानाम् ॥१४॥
श्वित्रं जयेच्चिक्कणतां गतेन
तेन प्रलिम्पन् बहुशः प्रघृष्टम् ।
कुष्ठं मषीं वा तिलकालकं वा
यद्वा व्रणे स्यादधिमांसजातम् ॥ १५ ॥
ातकद्वीपिसुधार्कमूलं गुञ्जाफलत्र्यूषणशङ्खचूर्णम् ।
ुं सकुष्ठं लवणानि पञ्च क्षारद्वयं लाङ्गलिकाञ्च पक्त्वा ॥१६॥
र्कदुग्धे घनमायसस्थं शलाकया तद्विदधीत लेपम् ।
डे किलासे तिलकालकेषु मांसेषु दुर्नामसु चर्मकीले ॥१७॥
शुद्धया शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम् ।
श्वित्रं कस्यचिदेव प्रशाम्यति क्षीणपापस्य ॥ १८ ॥

---

## एकविंशोऽध्यायः।

अथातः क्रिमिचिकित्सितं व्याख्यास्यामः॥

स्निग्धस्विन्ने गुडक्षीरमत्स्याद्यैः क्रिमिकोदरे।
उत्क्लेशितक्रिमिकफे शर्वरीं तां सुखोषिते॥ १॥
सुरसादिगणं मूत्रे क्वाथयित्वार्द्धवारिणि।
तं कषायं कणागालक्रिमिजित् कल्कयोजितम्॥ २॥
सतैलस्वर्जिकाक्षारं युञ्ज्याद् वस्तिं ततोऽहनि।
तस्मिन्नेव निरूढं तं पाययेत विरेचनम्॥ ३॥
त्रिवृत्कल्कं फलकणाकषायालोड़ितं ततः।
ऊर्द्ध्वाधः शोधिते कुर्य्यात् पञ्चकोलयुतं क्रमम्॥ ४॥
कटुतिक्तकषायाणां कषायैः परिषेचनम्।
काले विड़ङ्गतैलेन ततस्तमनुवासयेत्॥ ५॥
शिरोरोगनिषेधोक्तमाचरेन्मूर्द्धगेष्वनु।
उद्रिक्ततिक्तकटुकमल्पस्नेहञ्च भोजनम्॥ ६॥
विड़ङ्गकणामरिचपिप्पलीमूलशिग्रुभिः।
पिबेत् सस्वर्जिकाक्षारं यवागूं तक्रसाधिताम्॥७॥
रसं शिरीषाकिणिहीपारिभद्रककेम्बुकात्।
पलाशबीजपत्तूरपूतिकाद्वा पृथक् पिबेत्॥ ८॥
सक्षौद्रं सुरसादीन् वा लिह्यात् क्षौद्रयुतान् पृथक्।
शतकृत्वोऽश्वविट्चूर्णं विडङ्गक्वाथभावितम्॥ ९॥
क्रिमिमान्मधुना लिह्याद्भावितं वा वरारसैः।
शिरोगतेषु क्रिमिषु चूर्णं प्रधमनञ्च तत्॥ १०॥
आखुकर्णीकिसलयैः सुपिष्टैः पिष्टमिश्रितैः।
पक्त्वा पूपलिकां खादेद्धान्याम्लञ्च पिबेदनु॥ ११॥
सपञ्चकोललवणमसान्द्रं तक्रमेव वा।
नीपमार्कवनिर्गुण्डीपल्लवेष्वप्ययं विधिः॥ १२॥

विडङ्गचूर्णमिश्रैर्वा पिष्टैर्भक्ष्यान् प्रकल्पयेत्।
विडङ्गतण्डुलैर्युक्तमर्द्धांशैरातपस्थितम् ॥ १३ ॥
दिनमारुष्करं तैलं पाने वस्तौ च योजयेत्।
सुराह्वसरलस्नेहं पृथगेवं प्रकल्पयेत् ॥ १४ ॥
पुरीषजेषु सुतरां दद्याद् वस्तिविरेचने।
शिरोविरेकं वमनं शमनं कफजन्मसु ॥ १५ ॥
रक्तजानां प्रतीकारं कुर्य्यात् कुष्ठचिकित्सितात्।
इन्द्रलुप्तविधिश्चात्र विधेयो रोमभोजिषु ॥ १६ ॥

क्षीराणि मांसानि घृतं गुड़ञ्च
दधीनि शाकानि च पर्णवन्ति।
समासतोऽम्लान्मधुरान् रसांश्च
क्रमीन् जिहासुः परिवर्जयेच्च ॥ १७ ॥

---

## द्वाविंशोऽध्यायः।

अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः ॥
केवलं निरुपस्तम्भमादौ स्नेहैरुपाचरेत्।
वायुं सर्पिर्वसामज्जातैलपानैर्नरं ततः ॥ १ ॥
स्नेहाक्रान्तं समाश्वास्य पयोभिः स्नेहयेत् पुनः।
यूषैर्ग्राम्योदकानूपरसैर्वा स्नेहसंयुतैः ॥ २ ॥
पायसैः कृसरैः साम्ललवणैः सानुवासनैः।
वातघ्नैस्तर्पणैश्चान्नैः सुस्निग्धैः स्नेहयेत्ततः ॥ ३ ॥
स्वभ्यक्तं स्नेहसंयुक्तैः शङ्करायैः पुनः पुनः।
स्नेहाक्तं क्षिप्रमङ्गन्तु वक्रं स्तब्धं सवेदनम् ॥४॥
यथेष्टमानामयितुं सुखमेव हि शक्यते।
शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः ॥५॥
शक्यं कर्मण्यतां नेतुं किमु गात्राणि जीवताम् ॥

हर्षतोदरुगायामशोकस्तम्भग्रहादयः ॥ ६ ॥
स्विन्नस्याशु प्रशाम्यन्ति मार्दवं चापजायते।
स्नेहश्च धातून् संशुष्कान् पुष्णात्याशु प्रयोजितः ॥ ७ ॥
बलमग्निबलं पुष्टिं प्राणं चास्याभिवर्द्धयेत्।
असकृत्तं पुनः स्नेहैः स्वेदैश्च प्रतिपादयेत् ॥ ८ ॥
तथा स्नेहमृदौ कोष्ठे न तिष्ठन्त्यनिलामयाः।
यद्येतेन सदोषत्वात् कर्मणा न प्रशाम्यति ॥ ९ ॥
मृदुभिः स्नेहसंयुक्तैर्भेषजैस्तं विशोधयेत्।
घृतं तिल्वकसिद्धं वा सातलासिद्धमेव वा ॥ १० ॥
पयसैरण्डतैलं वा पिबेद्दोषहरं शिवम्।
स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः ॥ ११ ॥
स्रोतो बद्ध्वाऽनिलं रुन्ध्यात्तस्मात्तमनुलोमयेत्।
दुर्बलो यो विरेच्यः स्यात्तं निरूहैरुपाचरेत् ॥ १२ ॥
दीपनैः पाचनीयैर्वा भोज्यैर्वा तद्युतैर्नरम्।
संशुद्धस्योत्थिते चाग्नौ स्नेहस्वेदौ पुनर्हितौ ॥ १३ ॥
आमाशयगते वायौ वमितप्रतिभोजिते।
सुखाम्बुना षट्चरणं वचादिं वा प्रयोजयेत् ॥ १४ ॥
सन्धुक्षितेऽग्नौ परतो विधिः केवलवातिकः।
मत्स्यानाभिप्रदेशस्थे सिद्धान् बिल्वशलाटुभिः ॥ १५ ॥
वस्तिकर्म त्वधोनाभेः शस्यते वावपीडकः।
कोष्ठगे क्षारचूर्णाद्या हिताः पाचनदीपनाः ॥ १६ ॥
हृत्स्थे पयः स्थिरासिद्धं शिरोवस्तिः शिरोगते।
स्नेहिकं नावनं धूमः श्रोत्रादीनाञ्च तर्पणम् ॥ १७ ॥
स्वेदाभ्यङ्गानि वातानि हृद्यं चान्नं त्वगाश्रिते।
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥ १८ ॥
विरेको मांसमेदःस्थे निरूहाः शमनानि च।

वाह्याभ्यन्तरतः स्नेहैरस्थिमज्जागतं जयेत् ॥ १९ ॥
प्रहर्षोऽन्नञ्च शुक्रस्थे बलशुक्रकरं हितम् ।
विबद्धमार्गं दृष्ट्वा तु शुक्रं दद्याद्विरेचनम् ॥ २० ॥
विरिक्तं प्रतिभुक्तञ्च पूर्वोक्तां कारयेत् क्रियाम् ।
गर्भे शुष्के तु वातेन बालानां च विशुष्यताम् ॥ २१ ॥
सिताकाश्मर्य्यमधुकैः सिद्धमुत्थापने पयः ।
ह्रावसन्धिशिरःप्राप्ते स्नेहदाहोपनाहनम् ॥ २२ ॥
तैलं सङ्कुचितेऽभ्यङ्गो माषसैन्धवसाधितम् ।
आगारधूमलवणतैलैर्लेपः स्रुतेऽसृजि ॥ २३ ॥
सुप्तेऽङ्गे वेष्टयुक्ते तु कर्त्तव्यमुपनाहनम् ।
अथापतानकेनार्त्तमस्रस्ताक्षमवेपनम् ॥ २४ ॥
अस्तब्धमेढ्रमस्वेदं वहिरायामवर्जितम् ।
अखट्वाघातिनं चैनं त्वरितं समुपाचरेत् ॥ २५ ॥
तत्र प्रागेव सुस्निग्धं स्विन्नाङ्गे तीक्ष्णनावनम् ।
स्रोतोविशुद्धये युञ्ज्यादच्छपानं ततो घृतम् ॥ २६ ॥
विदार्य्यादिगणक्वाथदधिक्षीररसैः शृतम् ।
नातिमात्रं तथा वायुर्व्याप्नोति सहसैव वा ॥ २७ ॥
कुलत्थयवकोलानि भद्रदार्व्वादिकं गणम् ।
निःक्वाथ्यानूपमांसञ्च तेनाम्लैः पयसापि च ॥ २८ ॥
स्वादु स्कन्धप्रतीवापं महास्नेहं विपाचयेत् ।
सेकाभ्यङ्गावगाहान्नपाननस्यानुवासनैः ॥ २९ ॥
संहन्ति वातं ते ते च स्नेहस्वेदाः सुयोजिताः ।
वेगान्तरेषु मूर्द्धानमसकृच्चास्य रेचयेत् ॥ ३० ॥
अवपीडैः प्रधमनैस्तीक्ष्णैः श्लेष्मनिवर्हणैः ।
श्वसमास्तु विमुक्तास्तु तथा संज्ञां स विन्दति ।
सौवर्चलाभयाव्योषसिद्धं सर्पिश्चलेऽधिके ॥ ३१ ॥

पलाष्टकं तिल्वकतो वरायाः प्रस्थं पलांशं गुरुपञ्चमूलम् ।
सैरण्डसिंहीत्रिवृतं घटेऽपां पक्त्वा पचेत्पादशृतेन तेन ॥ ३२ ॥
दध्नः पात्रे यावशूकाग्निबिल्वैः सर्पिःप्रस्थं हन्ति तत्सेव्यमानम्
दुष्टान् वातानेकसर्वाङ्गसंस्थान्योनिव्यापद्गुल्मवर्ध्मोदरञ्च ॥३३

विधिस्तिल्वकवज्ज्ञेयो शम्याकाशोकयोरपि ।
चिकित्सितमिदं कुर्य्याच्छुद्धवातापतानके ॥ ३४ ॥
संसृष्टदोषे संसृष्टं चूर्णयित्वा कफान्विते ।
तुम्बुरूण्यभयाहिङ्गुपौष्करं लवणत्रयम् ॥ ३५ ॥
यवक्वाथाम्बुना पेयं हृत्पार्श्वार्त्त्यपतन्त्रके ।
हिङ्गु सौवर्चलं शुण्ठी दाड़िमं साम्लवेतसम् ॥ ३६ ॥
पिबेद्वा श्लेष्मपवनहृद्रोगोक्तञ्च शस्यते ।
आयामयोरर्दितवद् वाह्याभ्यान्तरयोः क्रिया ॥ ३७ ॥
तैलद्रोण्याञ्च शयनमान्तरोऽत्र सुदुस्तरः ।
विवर्णदन्तवदनः स्रस्ताङ्गो नष्टचेतनः ॥ ३८ ॥
प्रस्विन्नश्च धनुष्कम्भी दशरात्रं न जीवति ।
वेगेष्वतोऽन्यथा जीवन्मन्देषु विनतो जड़ः ॥ ३९ ॥
खञ्जः कुणिः पक्षहतः पङ्गुलो विकलोऽथवा ।
हनुस्रंसे हनुस्निग्धस्विन्नौ स्वस्थानमानयेत् ॥ ४० ॥
उन्नामयेच्च कुशलश्चिवुकं विहृते मुखे ।
नामयेत् संवृते शेषमेकायामवदाचरेत् ॥ ४१ ॥
जिह्वास्तम्भे यथावस्थं कार्य्यं वातचिकित्सितम् ।
अर्दिते नावनं मूर्ध्नि तैलं श्रोत्राक्षितर्पणम् ॥ ४२ ॥
सशोफे वमनं दाहरागयुक्ते शिराव्यधः ।
स्नेहनं स्नेहसंयुक्तं पक्षाघाते विरेचनम् ॥ ४३ ॥
अववाही हितं नस्यं स्नेहश्चोत्तरभक्तिकः ।
ऊरुस्तम्भे न च स्नेहो न च संशोधनं हितम् ॥ ४४ ॥

श्लेष्मामेदोवाहुल्याद्युक्त्या तत्क्षपणान्वितः ।
कुर्य्याद्रूक्षोपचारश्च यवश्यामाककोद्रवाः ॥ ४५ ॥
शाकैरलवणैः शस्ताः किञ्चित्तैलैर्जलैः शृतैः ।
जाङ्गलैरघृतैर्मांसैर्मध्वश्रोऽरिष्टपायिनः ॥ ४६ ॥
वत्सकादिर्हरिद्रादिर्वचादिर्वा ससैन्धवैः ।
आमवाते सुखाम्भोभिः पेयः षट्चरणोऽथवा ॥ ४७ ॥
लिह्यात् क्षौद्रेण वा श्रेष्ठाचव्यतिक्ताकणाघनान् ।
कल्कं समधु वा चव्यपथ्याग्निसुरदारुजम् ॥ ४८ ॥
मूत्रैर्वा शीलयेत्पथ्यां गुग्गुलुं गिरिसम्भवम् ।
व्योषाग्निमुस्तत्रिफलाविडङ्गैर्गुग्गुलुं समम् ॥ ४९ ॥
खादन् सर्वान् जयेद् व्याधीन् मेदःश्लेष्मामवातजान् ।
शाम्यत्येवं कफाक्रान्तः समेदस्कः प्रभञ्जनः ॥ ५० ॥
क्षारमूत्रान्वितान् स्वेदान् सेकानुवर्त्तनानि च ।
कुर्य्याल्लिह्याच्च मूत्राढ्यैः करञ्जफलसर्षपैः ॥ ५१ ॥
मूलैर्वाप्यर्कतर्कारीनिम्बजैः ससुराह्वयैः ।
सक्षौद्रसर्षपापक्वलोष्ठवल्मीकमृत्तिकैः ॥ ५२ ॥
कफक्षयार्थं व्यायामे सह्ये चैनं प्रवर्त्तयेत् ।
स्थलान्युल्लङ्घयेन्नारीः शक्तितः परिशीलयेत् ॥ ५३ ॥
स्थिरतोयं सरः क्षेमं प्रतिस्रोतो नदीं तरेत् ।
श्लेष्ममेदःक्षये चात्र स्नेहादीनवचारयेत् ।
स्थानदूष्यादि चालोच्य कार्य्या शेषेष्वपि क्रिया ॥ ५४ ॥
वरं सुरदारुसनागरं क्वथितमम्भसि तैलविमिश्रितम् ।
पीड़ितदेहगतिः पिबेद् द्रुतविलम्बितगोभवतीच्छया ॥५५॥
रास्नामहौषधह्रीपिपिप्पलीशठीपौष्करम् ।
पिष्ट्वा विपाचयेत् सर्पिर्वातरोगहरं परम् ॥ ५६ ॥
निम्बामृताद्वृषपटोलनिदिग्धिकानां

भागान् पृथग् दशपलान् विपचेद्घटेऽपाम्।
अष्टांशशेषितरसेन पुनश्च तेन
प्रस्थं घृतस्य विपचेत् पिचुभागकल्कैः ॥ ५७ ॥

पाठाविडङ्गसुरदारुगजोपकुल्या-
द्विक्षारनागरनिशामिशिचव्यकुष्ठैः।
तेजोवतीमरिचवत्सकदीप्यकाग्नि-
रोहिण्यरुष्करवचाकणमूलयुक्तैः ॥ ५८ ॥

मञ्जिष्ठयातिविषया विषया यवान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसङ्ख्यैः।
तत्सेवितं प्रधमति प्रबलं समीरं
सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक् ॥ ५९ ॥

नाड़ीव्रणार्बुदभगन्दरगण्डमाला-
जत्रूर्द्ध्वसर्वगदगुल्मगुदोत्थमेहान्।
यक्ष्मारुचिश्वसनपीनसकासशोफ-
हृत्पाण्डुरोगमदविद्रधिवातरक्तम् ॥ ६० ॥

बलाबिल्वशृते क्षीरे घृतमण्डं विपाचयेत्।
तस्य शुक्तिः प्रकुञ्चो वा नस्यं वाते शिरोगते ॥ ६१ ॥
तद्वात्सिद्धा वसा नक्रमत्स्यकूर्मचलूकजा।
विशेषेण प्रयोक्तव्या केवले मातरिश्वनि ॥ ६२ ॥

जीर्णं पिण्याकम्पञ्चमूलं पृथक् च
क्वाथ्यं क्वाथाभ्यामेकतस्तैलमाभ्याम्।
क्षीरादष्टांशं पाचयेत् तेन पानात्
वाता नश्येयुः श्लेष्मयुक्ताविशेषात् ॥ ६३ ॥

प्रसारिणी तुलाक्वाथे तैलप्रस्थं पयः समम्।
हिमैदामिशिमञ्जिष्ठाकुष्ठारास्नाकुचन्दनैः ॥ ६४ ॥
जीवकर्षभकाकोलीयुगुलामरदारुभिः।

कल्कितैर्विपचेत् पर्वमारुतामयनाशनम् ॥ ६५ ॥
लशाखस्य सहाचरस्य तुलां तथैतां दशमूलतश्च।
नि पञ्चाशदभीरुतश्च पादावशेषं विपचेद्दहेऽपाम् ॥६६॥
सेव्यनखकुष्ठहिमैलास्पृक्प्रियङ्गुनलिकाम्बुशिलाजैः।
हितानलदलोहसुराह्वैः कोपनामिशितुरुष्कनतैश्च ॥६७॥

तुल्यक्षीरम्पालिकैस्तैलपात्रं सिद्धं
कृच्छ्रान् शीलितं हन्ति वातान्।
कम्पाक्षेपस्तम्भशोषादियुक्तान्
गुल्मोन्मादौ पीनसं योनिरोगान् ॥६८॥

सहाचरतुलायास्तु रसे तैलाढ़कं पचेत्।
मूलकल्काद्दशपलं पयो दत्त्वा चतुर्गुणम् ॥ ६९ ॥
अथवा नतषड्ग्रन्थास्थिराकुष्ठसुराह्वयान्।
सैलानलदशैलेयशताह्वारक्तचन्दनान् ॥ ७० ॥
सिद्धेऽस्मिन् शर्कराचूर्णादष्टादशपलं क्षिपेत्।
मेढ़स्य सम्मतं तैलं तत्कृच्छ्राननिलामयान् ॥ ७१ ॥
वातकुण्डलिकोन्मादगुल्मवर्ध्मादिकान् जयेत्।
बलाशतं छिन्नरुहापादं रास्नाष्टभागिकम् ॥ ७२ ॥
जलाढ़कं शते पक्त्वा शतभागस्थिते रसे।
दधिमस्त्विक्षुनिर्य्यासशुक्तैस्तैलाढ़कं समैः ॥ ७३ ॥
पचेत्साजपयोऽर्द्धांशं कल्कैरेभिः पलोन्मितैः।
शठीसरलदार्व्वेलामञ्जिष्ठागुरुचन्दनैः ॥ ७४ ॥
पद्मकातिबलामुस्ताशूर्पपर्णीहरेणुभिः।
यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः ॥ ७५ ॥
पलाशरसकस्तूरीनलिकाजातिकोशकैः।
स्पृक्काकुङ्कुमशैलेयजातिकाकट्फलाम्बुभिः ॥ ७६ ॥
त्वक्कुन्दरुक्कर्पूरतुरुष्कश्रीनिवासकैः।

लवङ्गनखकङ्कोलकुष्ठमांसीप्रियङ्गुभिः ॥ ७७ ॥
स्थौणेयतगरध्यामवचामदनकप्लवैः।
सनागकेसरैः सिद्धे दद्याच्चात्रावतारिते ॥ ७८ ॥
पत्रकल्कं ततः पूतं विधिना तत्प्रयोजितम्।
कासश्वासज्वरच्छर्दिमूर्च्छागुल्मक्षतक्षयान् ॥ ७९ ॥
प्लीहशोषमपस्मारमलक्ष्मीं च प्रणाशयेत्।
बलातैलमिदं श्रेष्ठं वातव्याधिविनाशनम् ॥ ८० ॥

पाने नस्येऽन्वासनेऽभ्यञ्जने च
स्नेहाः काले सम्यगेते प्रयुक्ताः।
दुष्टान् वातानाशु शान्तिं नयेयुः
वंन्ध्या नारीः पुत्रभाजश्च कुर्य्युः ॥ ८१ ॥

स्नेहस्वेदैर्द्रुतः श्लेष्मा यदा पक्वाशये स्थितः।
पित्तं वा दर्शयेद्रूपं वस्तिभिस्तं विनिर्जयेत् ॥ ८२ ॥

## त्रयोविंशोऽध्यायः।

अथातो वातशोणितचिकित्सितं व्याख्यास्यामः ॥
वातशोणितिनो रक्तं स्निग्धस्य बहुशो हरेत्।
अल्पाल्पं पालयन् वायुं यथादोषं यथाबलम् ॥ १ ॥
रुग्रागतोददाहेषु जलौकाभिर्विनिर्हरेत्।
शृङ्गतुम्बैश्चिमिचिमाकण्डूरुग्दूयनान्वितम् ॥ २ ॥
प्रच्छानेन शिराभिर्वा देशाद्देशान्तरं व्रजेत्।
अङ्गग्लानौ तु न स्राव्यं रूक्षं वातोत्तरं च यत् ॥ ३ ॥
गम्भीरं श्वयथुं स्तम्भं कम्पस्नायुशिरामयान्।
ग्लानिमन्यांश्च वातोत्थान् कुर्य्याद्वायुरसृक्क्षयात् ॥ ४ ॥
विरेच्यः स्नेहयित्वा तु स्नेहयुक्तैर्विरेचनैः।
वातोत्तरे वातरक्ते पुराणं पाययेद्घृतम् ॥ ५ ॥

श्रावणीक्षीरकाकोलीक्षीरिणीजीवकैः समैः ।
सिद्धं सर्षपकैः सर्पिः सक्षीरं वातरक्तनुत् ॥ ६ ॥
द्राक्षामधूकवारिभ्यां सिद्धं वा ससितोपलम् ।
घृतं पिबेत्तथा क्षीरं गुडूचीस्वरसे शृतम् ॥ ७ ॥
तैलं पयः शर्कराञ्च पाययेद्वासुमूर्च्छितम् ।
बलाशतावरीरास्नादशमूलैः सपीलुभिः ॥ ८ ॥
श्यामैरण्डस्थिराभिश्च वातार्त्तिघ्नं शृतं पयः ।
धारोष्णं मूत्रयुक्तं वा क्षीरं दोषानुलोमनम् ॥ ९ ॥
पैत्ते पक्वा वरीतिक्ता पटोलत्रिफलामृताः ।
पिबेद् घृतं वा क्षीरं वा स्वादु तिक्तकसाधितम् ॥१०॥
क्षीरेणैरण्डरतैलं च प्रयोगेण पिबेन्नरः ।
बहुदोषो विरेकार्थं जीर्णे क्षीरोदनाशनः ॥ ११ ॥
कषायमभयानां वा पाययेद् घृतभर्जितम् ।
क्षीरानुपानं त्रिवृताचूर्णं द्राक्षारसेन वा ॥ १२ ॥
निर्हरेद्वा मलं तस्य सघृतैः क्षीरवस्तिभिः ।
न हि वस्तिसमं किञ्चिद्वातरक्तचिकित्सितम् ॥ १३ ॥
विशेषात्पायुपार्श्वोरुपर्वास्थिजठरार्त्तिषु ।
मुस्तद्राक्षाहरिद्राणां पिबेत् क्वाथं कफोल्वणे ॥१४॥
सक्षौद्रं त्रिफलाया वा गडूचीं वा यथा तथा ।
यथार्हस्नेहपीतं च वामितं मृदु रूक्षयेत् ॥ १५ ॥
त्रिफलाव्योषपत्रैलात्वक्क्षीरीचित्रकं वचाम् ।
विड़ङ्गं पिप्पलीमूलं लोमशं वृषकं त्वचम् ॥ १६ ॥
ऋद्धिं लाङ्गलिकं चव्यं समभागानि पेषयेत् ।
कल्कैर्लिम्पायसीं पात्रीं मध्याह्ने भक्षयेदिदम् ॥ १७ ॥
वातास्रे सर्वदोषेऽपि परं शूलान्विते हितम् ।
कोकिलाक्षकनिर्यूहः पीतस्तच्छाकभोजिना ॥ १८ ॥

क्षपाभ्यास इव क्रोधं वातरक्तं नियच्छति।
पञ्चमूलस्य धात्र्या वा रसैर्लीढ़ीतकीं वसाम् ॥ १९ ॥
खुड़ं सुरूढमप्यङ्गे ब्रह्मचारी पिबन् जयेत्।
इत्याभ्यन्तरमुद्दिष्टं कर्म बाह्यमतः परम् ॥ २० ॥
आरनालाढ़के तैलं पादसर्जरसं शृतम्।
प्रभूते खजितं तोये ज्वरदाहार्त्तिनुत्परम् ॥ २१ ॥
समधूच्छिष्टमञ्जिष्ठं ससर्जरससारिवम्।
पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम् ॥ २२ ॥
दशमूले शृतं क्षीरं सद्यः शूलनिवारणम्।
परिषेकोऽनिलप्राये तद्वत्कोष्णेन सर्पिषा ॥ २३ ॥
स्नेहैर्मधुरसिद्धैर्वा चतुर्भिः परिषेचयेत्।
स्तम्भाक्षेपकशूलार्त्तं कोष्णैर्दाहे तु शीतलैः ॥ २४ ॥
तद्वद्गव्याविकच्छागैः क्षीरैस्तैलविमिश्रितैः।
निक्वाथैर्जीवनीयानां पञ्चमूलस्य वा लघोः ॥ २५ ॥
द्राक्षेक्षुरसमद्यानि दधिमस्त्वम्लकाञ्जिकम्।
सेकार्थं तण्डुलक्षौद्रं शर्कराम्भश्च शस्यते ॥ २६ ॥
प्रियाः प्रियंवदा नार्य्यश्चन्दनार्द्रकरस्तनाः।
स्पर्शशीताः सुखस्पर्शा घ्नन्ति दाहं रुजं क्लमम् ॥ २७ ॥
सरागे सरुजे दाहे रक्तं हृत्वा प्रलेपयेत्।
प्रपौण्डरीकमञ्जिष्ठादार्वीमधुकचन्दनैः ॥ २८ ॥
ससितोपलकासेक्षुमसूरैरकसक्तुभिः।
लेपो रुग्दाहवीसर्परागशोफनिवर्हणः ॥ २९ ॥
वातघ्नैः साधितः स्निग्धः कृशरो मुद्गपायसः।
तिलसर्षपपिण्डैश्च शूलघ्नमुपनाहनम् ॥ ३० ॥
औदका प्रसहानूपवेसवाराः सुसंस्कृताः।
जीवनीयौषधस्नेहयुक्ताः स्युरुपनाहने ॥ ३१ ॥

स्तम्भतोदरुगायामशोफाङ्गग्रहनाशनाः ।
जीवनीयौषधैः सिद्धाः सपयस्का वसाऽपि वा ॥३२॥
घृतं सहचरान् मूलं जीवन्तो छागलं पयः ।
लेपः पिष्टा तिलास्तद्वद् भृष्टाः पयसि निर्वृताः ॥३३॥
क्षीरपिष्टत्तुमालेपमेरण्डस्य फलानि वा ।
कुर्य्यात् शूलनिवृत्त्यर्थं शताह्वां वाऽनिलेऽधिके ॥ ३४ ॥
मूत्रक्षारसुरापक्कं घृतमभ्यञ्जने हितम् ।
सिद्धं समधुशुक्तं वा सेकाभ्यङ्गाः कफोत्तरे ॥ ३५ ॥
गृहधूमो वचा कुष्ठं शताह्वा रजनीद्वयम् ।
प्रलेपः शूलनुद्वातरक्ते वातकफोत्तरे ॥ ३६ ॥
मधुशिग्रोर्हितं तद्वद् वीजं धान्याम्लसंयुतम् ।
मुहूर्त्तलिप्तमम्लैश्च सिञ्चेद्वातकफोत्तरे ॥ ३७ ॥
उत्तानं लेपनाभ्यङ्गपरिषेकावगाहनैः ।
विरेकास्थापनैः स्नेहपानैर्गम्भीरमाचरेत् ॥ ३८ ॥
वातश्लेष्मोत्तरे कोष्णा लेपाद्यास्तत्र शीतलैः ।
विदाहशोफरुक्कण्डूविवृद्धिः स्तम्भनाद्भवेत् ॥ ३९ ॥
पित्तरक्तोत्तरे वातरक्ते लेपादयो हिमाः ।
उष्णैः प्लोषोपरुग्रागस्वेदापदरणोद्भवः ॥ ४० ॥
मधुयष्ट्याः पलशतं कषाये पादशेषिते ।
तैलाढ़कं समक्षीरं पचेत्कल्कैः पलोन्मितैः ॥ ४१ ॥
स्थिरातामलकीदूर्वापयस्याभीरुचन्दनैः ।
लोहहंसपदीमांसीद्विमेदामधुपर्णीभिः ॥ ४२ ॥
काकोलीक्षीरकाकोलीशतपुष्पार्द्धिपद्मकैः ।
जीवन्तीजीवर्षभकत्वक्पत्रनखबालकैः ॥ ४३ ॥
प्रपौण्डरीकमञ्जिष्ठासारिवेन्द्रीवितुन्नकैः ।
चतुःप्रयोगं वातासृक्पित्तदाहज्वरार्त्तिनुत् ॥ ४४ ॥

बलाकल्ककषायाभ्यां तैलं क्षीरसमं पचेत्।
सहस्रशतपाकं तद्दातासृग्वातरोगनुत् ॥ ४५ ॥
रसायनं मुख्यतममिन्द्रियाणां प्रसादनम्।
जीवनं बृंहणं स्वर्यं शुक्रासृग्दोषनाशनम् ॥ ४६ ॥
कुपिते मार्गसंरोधान्मेदसो वा कफस्य वा।
अतिवृद्ध्यानिले शस्तुमादौ स्नेहनबृंहणम् ॥ ४७ ॥
कृत्वा तन्त्राव्यवातोक्तं वातशोणितिकं ततः।
भेषजं स्नेहनं कुर्य्याद्यच्च रक्तप्रसादनम् ॥ ४८ ॥
प्राणादिकोपे युगपद्यथोद्दिष्टं यथामयम्।
यथासन्नञ्च भैषज्यं विकल्प्यं स्याद् यथाबलम् ॥ ४९ ॥
नीते निरामतां सामे स्वेदलङ्घनपाचनैः।
रूक्षैश्चालेपसेकाद्यैः कुर्य्यात् केवलवातनुत् ॥ ५० ॥
शोषाक्षेपणसङ्कोचस्तम्भस्वपनकम्पनम्।
हनुस्रंसोऽर्दितं खाञ्ज्यं पाङ्गुल्यं खुड़वातता ॥ ५१ ॥
सन्धिच्युतिः पक्षवधो मेदोमज्जास्थिगा गदाः।
एते स्थानस्य गाम्भीर्य्यात्सिध्येयुर्यत्नतो न वा ॥ ५२ ॥
तस्माज्जयेन्नवानेतान् बलिनो निरुपद्रवान्।
वायौ पित्तावृते शीतमुष्णाञ्च बहुशः क्रियाम् ॥ ५३ ॥
व्यत्यासाद् योजयेत्सर्पिर्जीवनीयञ्च पाययेत्।
धन्वमांसं यवाः शालिर्विरेकः क्षीरवान्मृदुः ॥ ५४ ॥
सक्षीरा वस्तयः क्षीरं पञ्चमूलबलाशृतम्।
कालेऽनुवासनं तैलं मधुरौषधसाधितम् ॥ ५५ ॥
यष्टीमधुबलातैलघृतक्षीरैश्च सेचनम्।
पञ्चमूलकषायेण वारिणा शीतलेन च ॥ ५६ ॥
कफावृते यवान्नानि जाङ्गला मृगपक्षिणः।
स्वेदास्तीक्ष्णा निरूहाश्च वमनं सविरेचनम् ॥ ५७ ॥

पुराणसर्पिस्तैलञ्च तिलसर्षपजं हितम्।
संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्जयेत्॥ ५८॥
कारयेद्रक्तसंसृष्टे वाते शोणितिकीं क्रियाम्।
स्वेदाभ्यङ्गरसाः क्षीरं स्नेहो मांसावृते हितः॥ ५९॥
प्रमेहमेदोवातघ्नमाव्यवाते भिषग्जितम्।
महास्नेहोऽस्थिमज्जस्थे पूर्वोक्तं रेतसावृते॥ ६०॥
अन्नावृते पाचनीयं वमनं दीपनं लघु।
मूत्रावृते मूत्रलानि स्वेदा उत्तरवस्तयः॥ ६१॥
एरण्डतैलं वर्चःस्थे वस्तिस्नेहाश्च भेदिनः।
कफपित्ताविरुद्धं यद्यच्च वातानुलोमनम्॥ ६२॥
सर्वस्थानावृते त्वाशु तत्कार्य्यं मातरिश्वनि।
अनभिष्यन्दि च स्निग्धं स्रोतसां शुद्धिकारणम्॥ ६३॥
पाचना वस्तयः प्रायो मधुराः सानुवासनाः।
प्रसमीक्ष्य बलाधिक्यं मृदुकायविरेचनम्॥ ६४॥
रसायनानां सर्वेषामुपयोगः प्रशस्यते।
शिलाह्वस्य विशेषेण पयसा शुद्धगुग्गुलोः॥ ६५॥
लेहो वा भार्गवस्तद्वदेकादशसितासितः।
अपाने त्वावृते सर्वं दीपनं ग्राहिभेषजम्॥ ६६॥
वातानुलोमनं कार्य्यं मूत्राशयविशोधनम्।
इति सङ्क्षेपतः प्रोक्तमावृतानां चिकित्सितम्॥ ६७॥
प्राणादीनां भिषक्कुर्य्याद्वितर्क्य स्वयमेव तत्।
उदानं योजयेदूर्द्धमपानं चानुलोमयेत्॥ ६८॥
समानं शमयेद्विद्वांस्त्रिधा व्यानं च योजयेत्।
प्राणो रक्ष्यश्चतुर्भ्योऽपि तत्स्थितौ देहसंस्थितिः॥ ६९॥
स्वं स्वं स्थानं नयेदेवं वृत्तान्वातान्विमार्गगान्।
सर्वं चावरणं पित्तरक्तसंसर्गवर्जितम्॥ ७०॥

रसायनविधानेन लशुनो हन्ति शीलितः ।
पित्तावृते पित्तहरं मरुतश्चानुलोमनम् ॥ ७१ ॥
रक्तावृतेऽपि तद्वच्च खुडोक्तं यच्च भेषजम् ।
रक्तपित्तानिलहरं विविधञ्च रसायनम् ॥ ७२ ॥
यथानिदानं निर्दिष्टमिति सम्यक्चिकित्सितम् ।
आयुर्वेदफलं स्थानमेतत्सद्योऽर्त्तिनाशनम् ॥ ७३ ॥
चिकित्सितं हितं पथ्यं प्रायश्चित्तं भिषग्जितम् ।
भेषजं शमनं शस्तं पर्य्यायैः स्मृतमौषधम् ॥ ७४ ॥

---

# अष्टाङ्गहृदयसंहितायां

## कल्पस्थानम्।

---

### प्रथमोऽध्यायः।

अथातो वमनकल्पं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः।

वमने मदनं श्रेष्ठं त्रिवृन्मूलं विरेचने।
नित्यमन्यस्य तु व्याधिविशेषेण विशिष्टता ॥ १ ॥
फलानि तानि पाण्डूनि न चातिहरितान्यपि।
आदायाह्नि प्रशस्तर्क्षे मध्ये ग्रीष्मवसन्तयोः ॥ २ ॥
प्रमृज्य कुशमुत्तोल्यां क्षिप्त्वा बध्वा प्रलेपयेत्।
गोमयेनानुमुत्तोलीं धान्यमध्ये निधापयेत् ॥ ३ ॥
मृदुभूतानि मध्विष्टगन्धानि कुशवेष्टनात्।
निष्कृष्य निर्गतेऽष्टाहे शोषयेत्तान्यथातपे ॥ ४ ॥
तेषां ततः सुशुष्काणामुद्धृत्य फलपिप्पलीः।
दधिमध्वाज्यपललैर्मृदित्वा शोषयेत्पुनः ॥ ५ ॥
ततः सुगुप्तं संस्थाप्य कार्य्यकाले प्रयोजयेत्।
अथादाय ततो मात्रां जर्जरीकृत्य वासयेत् ॥ ६ ॥
शर्वरीं मधुयष्ट्या वा कोविदारस्य वा जले।
कर्वुदारस्य बिम्ब्या वा नीपस्य विदुलस्य वा ॥ ७ ॥
शणपुष्प्याः सदापुष्प्याः प्रत्यक्पुष्प्युदकेऽथवा।
ततः पिबेत्कषायं तं प्रातर्मृदितगालितम् ॥ ८ ॥

सूत्रोदितेन विधिना साधु तेन तथा वमेत् ।
श्लेष्मज्वरप्रतिश्यायगुल्मान्तर्विद्रधीषु च ॥ ९ ॥
प्रच्छर्दयेद्विशेषेण यावत्पित्तस्य दर्शनम् ।
फलपिप्पलचूर्णं वा क्काथेन स्वेन भावितम् ॥ १० ॥
त्रिभागत्रिफलाचूर्णं कोविदारादिवारिणा ।
पिबेज्ज्वरारुचिष्वेवं ग्रन्थ्यपच्यर्बुदोदरी ॥ ११ ॥
पित्ते कफस्थानगते जीमूतादिजलेन तत् ।
हृद्दाहेऽधोऽस्रपित्ते च क्षीरं तत्पिप्पलीशृतम् ॥ १२ ॥
क्षैरेयीं वा कफच्छर्दिप्रसेकतमकेषु तु ।
दध्युत्तरं वा दधि वा तत् शृतक्षीरसम्भवम् ॥ १३ ॥
फलादिक्काथकल्काभ्यां सिद्धं तत्सिद्धदुग्धजम् ।
सर्पिः कफाभिभूतेऽग्नौ शुष्यद्देहे च वामनम् ॥ १४ ॥
स्वरसं फलमज्ज्ञो वा भल्लातकविधिशृतम् ।
आदर्वीलेपनात्सिद्धं लीढ्वा प्रच्छर्दयेत्सुखम् ॥ १५ ॥
तं लेहं भक्ष्यभोज्येषु तत्कषायांश्च योजयेत् ।
वत्सकादिप्रतीवापः कषायः फलमज्जजः ॥ १६ ॥
निम्बार्कान्यतरक्काथसमायुक्तो नियच्छति ।
बद्धमूलानपि व्याधीन् सर्वान् सन्तर्पणोद्भवान् ॥ १७ ॥
राटपुष्पफलश्लक्ष्णचूर्णैर्माल्यं सुरूक्षितम् ।
वमेन्मण्डरसादीनां तृप्तो जिघ्रन् सुखं सुखी ॥ १८ ॥
एवमेव फलाभावे कल्प्यं पुष्पं शलाटु वा ।
जीमूताद्याश्च फलवत् जीमूतन्तु विशेषतः ॥ १९ ॥
प्रयोक्तव्यं ज्वरश्वासकासहिध्मादिरोगिणाम् ।
पयः पुष्पेऽस्य निर्वृत्ते फले पेयापयस्कृताः ॥ २० ॥
लोमशे क्षीरसन्तानं दध्युत्तरमलोमशे ।
श्रिते पयसि दध्यम्लं जाते हरितपाण्डुके ॥ २१ ॥

आसुत्य वारुणीमण्डं पिबेन्मृदितगालितम्।
कफादरोचके कासे पाण्डुत्वे राजयक्ष्मणि ॥ २२ ॥
इयञ्च कल्पना कार्य्या तुम्बीकोशातकीष्वपि।
पर्य्यागतानां शुष्काणां फलानां वेणिजन्मनाम् ॥ २३ ॥
चूर्णस्य पयसा शुक्तिं वातपित्तार्दितः पिबेत्।
द्वे वा त्रीण्यपि वाऽऽपोथ्य क्वाथे तिक्तोत्तमस्य वा ॥ २४ ॥
आरग्वधादिनवकादासुत्यान्यतमस्य वा।
विमृद्य पूतं तं क्वाथं पित्तश्लेष्मज्वरी पिबेत् ॥ २५ ॥
जीमूतचूर्णं कल्कं वा पिबेच्छीतेन वारिणा।
ज्वरे पैत्ते कवोष्णेन कफवातात्कफादपि ॥ २६ ॥
कासश्वासविषच्छर्दिज्वरार्त्ते कफकर्शिते।
इक्ष्वाकुर्वमने शस्तः प्रताम्यति च मानवे ॥ २७ ॥
फलपुष्पविहीनस्य प्रवालैस्तस्य साधितम्।
पित्तश्लेष्मज्वरे क्षीरं पित्तोद्रिक्ते प्रयोजयेत् ॥ २८ ॥
हृतमध्ये फले जीर्णे स्थितं क्षीरं यदा दधि।
स्यात्तदा कफजे कासश्वासे वम्यं च पाचयेत् ॥ २९ ॥
मस्तुना वा फलान्मध्यं पाण्डुकुष्ठविषार्दितः।
तेन तक्रं विपक्वं वा पिबेत् समधुसैन्धवम् ॥ ३० ॥
भावयित्वाजदुग्धेन बीजं तेनैव वा पिबेत्।
विषगुल्मोदरग्रन्थिगण्डेषु श्लीपदेषु च ॥ ३१ ॥
सक्तुभिर्वा पिबेन्मन्थं तुम्बीस्वरसभावितैः।
कफोद्भवे ज्वरे कासे गलरोगेष्वरोचके ॥ ३२ ॥
गुल्मे ज्वरे प्रसक्ते च कल्कं मांसरसैः पिबेत्।
नरः साधु वमत्येवं न च दौर्बल्यमश्नुते ॥ ३३ ॥
तुम्ब्याः फलरसैः शुष्कैः सपुष्पैरवचूर्णितम्।
छर्दयेन्माल्यमाघ्राय गन्धसम्पत्सुखोचितः ॥ ३४ ॥

कासगुल्मोदरगरे वाते श्लेष्माशयस्थिते।
कफे च कण्ठवक्त्रस्थे कफसञ्चयजेषु च ॥ ३५ ॥
धामार्गवो गदेष्विष्टः स्थिरेषु च महत्सु च।
जीवकर्षभकौ वीरा कपिकच्छूशतावरी ॥ ३६ ॥
काकोली श्रावणी मेदा महामेदा मधूलिका।
तद्रजोभिः पृथग् लेह्या धामार्गवरजोऽन्विताः ॥ ३७ ॥
कासे हृदयदाहे च शस्ता मधुसिताप्लुताः।
ते सुखाम्भोऽनुपानाः स्युः पित्तोष्मसहिते कफे ॥ ३८ ॥
धान्यतुम्बुरुयूषेण कल्कस्तस्य विषापहः।
बिम्ब्याः पुनर्नवाया वा कासमर्दस्य वा रसे ॥ ३९ ॥
एकं धामार्गवं द्वे वा मानसे म्रदितं पिबेत्।
तच्छृतक्षीरजं सर्पिः साधितं वा फलादिभिः ॥ ४० ॥
क्ष्वेडोऽतिकटुतीक्ष्णोष्णः प्रगाढेषु प्रशस्यते।
कुष्ठपाण्ड्वामयप्लीहशोफगुल्मगरादिषु ॥ ४१ ॥
पृथक् फलादिषट्कस्य क्वाथे मांसमनूपजम्।
कोशातक्या समं सिद्धं तद्रसं लवणं पिबेत् ॥ ४२ ॥
फलादिपिप्पलीतुल्यं सिद्धं क्ष्वेडरसेऽथवा।
क्ष्वेडक्वाथे पिबेत् सिद्धं मिश्रमिक्षुरसेन वा ॥ ४३ ॥
कुटजं सुकुमारेषु पित्तरक्तकफोदये।
ज्वरे विसर्पे हृद्रोगे खुडे कुष्ठे च पूजितम् ॥ ४४ ॥
सर्षपाणां मधूकानां तोयेन लवणस्य वा।
[illegible]ययेत् कौटजं बीजं युक्तं कृशरयाऽथवा ॥ ४५ ॥
[illegible]ताहं वार्कदुग्धाक्तं तच्चूर्णं पाययेत् पृथक्।
फलजीमूतकेक्ष्वाकुजीवन्तीजीवकोदकैः ॥ ४६ ॥
वमनौषधमुख्यानामिति कल्पदिगीरिता।
बीजेनानेन मतिमानन्यान्यपि च कल्पयेत् ॥ ४७ ॥

## द्वितीयोऽध्यायः ।

अथातो विरेचनकल्पं व्याख्यास्यामः ।

कषाया मधुरा रूक्षा विपाके कटुका त्रिवृत् ।
कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपनी ॥ १ ॥
सैदाग्नेमैौषधैर्युक्ता वातपित्तकफापहैः ।
कल्पवैशेष्यमासाद्य जायते सर्वरोगजित् ॥ २ ॥
द्विधा ख्यातञ्च तन्मूलं श्यामं श्यामारुणं त्रिवृत् ।
त्रिवृदाख्यं वरतरं निरपायं सुखं तयोः ॥ ३ ॥
सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तद्धितम् ।
मूर्च्छा संमोहहृत्कण्ठकर्षणक्षणनप्रदम् ॥ ४ ॥
श्यामं तीक्ष्णाशुकारित्वादतस्तदपि शस्यते ।
क्रूरे कोष्ठे बह्वौ दोषे क्लेशक्षमिणि चातुरे ॥ ५ ॥
गम्भीरानुगतं श्लक्ष्णमतिर्यग्विसृतञ्च यत् ।
गृहीत्वा विसृजेत् काष्ठं त्वचं शुष्कां निधापयेत् ॥ ६ ॥
अथ काले तु तच्चूर्णं किञ्चिन्नागरसैन्धवम् ।
वातामये पिबेदम्लैः पित्ते साज्यासितामधु ॥ ७ ॥
क्षीरद्राक्षेक्षुकाश्मर्य्यस्वादुस्कान्धवरारसैः ।
कफामये पीलुरसमूत्रमद्याम्लकाञ्जिकैः ॥ ८ ॥
पञ्चकोलादिचूर्णैश्च युक्त्या युक्तं कफापहैः ।
त्रिवृत्कल्ककषायेण साधितः ससितो हिमः ॥ ९ ॥
मधुत्रिजातसंयुक्तो लेह्यो हृद्यं विरेचनम् ।
अजगन्धातुगाक्षीरी विदारी शर्करा त्रिवृत् ॥ १० ॥
चूर्णितं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ।
सन्निपातज्वरस्तम्भपिपासादाहपीड़ितः ॥ ११ ॥
लिम्पेदन्तस्त्रिवृतया द्विधा कृत्वेक्षुगण्डिकाः ।

एकीकृत्य पचेत् स्विन्नं पुटपाकेन भक्षयेत् ॥ १२ ॥
त्वगेलाभ्यां समा नीली तैस्त्रिवृत्तैश्च शर्करा ।
चूर्णं फलरसक्षौद्रसक्तुभिस्तर्पणं पिबेत् ॥ १३ ॥
वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च ।
नरेषु सुकुमारेषु निरपायं विरेचनम् ॥ १४ ॥
विड़ङ्गतण्डुलवरायावशूककणात्रिवृत् ।
सर्वेभ्योऽर्द्धेन तल्लीढ़ं मध्वाज्येन गुड़ेन वा ॥ १५ ॥
गुल्मं प्लीहोदरं कासं हलीमकमरोचकम् ।
कफवातकृतांश्चान्यान् परिमार्ष्टि गदान् बहून् ॥ १६ ॥
विड़ङ्गपिप्पलीमूलत्रिफलाधान्यचित्रकम् ।
मरीचेन्द्रयवाजाजीपिप्पलीहस्तिपिप्पली: ॥ १७ ॥
दीप्यकं पञ्चलवणं चूर्णितं कार्षिकं पृथक् ।
तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ॥ १८ ॥
धात्रीफलरसप्रस्थांस्त्रीन् गुड़ार्द्धतुलान्वितान् ।
पक्त्वा मृद्वग्निना खादेत्ततो मात्रामयन्त्रण: ॥ १९ ॥
कुष्ठार्श: कामलागुल्ममेहोदरभगन्दरान् ।
ग्रहणीपाण्डुरोगांश्च हन्ति पुंसवनांश्च स: ॥ २० ॥
गुड़: कल्याणको नाम सर्वेष्वृतुषु यौगिक: ।
व्योषत्रिजातकाम्भोदकृमिघ्नामलकैस्त्रिवृत् ॥ २१ ॥
सर्वै: समा समसिता: क्षौद्रेण गुटिका: कृता: ।
मूत्रकृच्छ्रज्वरच्छर्दिकासशोषभ्रमक्षये ॥ २२ ॥
तापे पाण्ड्वामयेऽल्पेऽग्नौ शस्ता: सर्वविषेषु च ।
त्रिवृता कौटजं बीजं पिप्पलीविश्वभेषजम् ॥ २३ ॥
क्षौद्रद्राक्षारसोपेतं वर्षाकाले विरेचनम् ।
त्रिवृद्दुरालभामुस्तशर्करोदीच्यचन्दनम् ॥ २४ ॥
द्राक्षाम्बुना सयष्ट्याह्वं सातलं जलदात्यये ।

त्रिवृतां चित्रकं पाठामजाजीं सरलं वचाम् ॥ २५ ॥
स्वर्णक्षीरीं च हेमन्ते चूर्णमुष्णाम्बुना पिबेत् ।
त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ॥ २६ ॥
त्रिवृत्त्रायन्तिहपुषासातलाकटुरोहिणीः ।
स्वर्णक्षीरीं च संचूर्ण्य गोमूत्रे भावयेत् त्र्यहम् ॥ २७ ॥
एष सर्वर्तुको योगः स्निग्धानां मलदोषहृत् ।
श्यामात्रिवृद्दुरालभाहस्तिपिप्पलिवल्लकम् ॥ २८ ॥
नीलिनी कटुका मुस्ता श्रेष्ठायुक्तं सुचूर्णितम् ।
रसाज्योष्णाम्बुभिः शस्तं रूक्षाणामपि सर्वदा ॥ २९ ॥
ज्वरहृद्रोगवातासृगुदावर्त्तादिरोगिषु ।
राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतलः ॥ ३० ॥
बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ।
योज्यो मृदनपायित्वाद्विशेषाच्चतुरङ्गुलः ॥ ३१ ॥
फलकाले परिणतं फलं तस्य समाहरेत् ।
तेषां गुणवतां भारं सिकतासु विनिक्षिपेत् ॥ ३२ ॥
सप्तरात्रात् समुद्धृत्य शोषयेच्चातपे ततः ।
ततो मज्जानमुद्धृत्य शुचौ पात्रे निधापयेत् ॥ ३३ ॥
द्राक्षारसेन तं दद्याद्दाहोदावर्त्तपीड़िते ।
चतुर्वर्षे सुखं बाले यावद्वा दशवार्षिके ॥ ३४ ॥
चतुरङ्गुलमज्ज्ञो वा कषायं पाययेद्भिषम् ।
दधिमण्डसुरामण्डधात्रीफलरसैः पृथक् ॥ ३५ ॥
सौवीरकेण वा युक्तं कल्केन त्रैवृतेन वा ।
दन्तीकषाये तन्मज्ज्ञो गुड़ं जीर्णं च निक्षिपेत् ॥ ३६ ॥
तमरिष्टं स्थितं मासं पाययेत् पक्षमेव वा ।
त्वचं तिल्वकमूलस्य त्यक्ताभ्यन्तरवल्कलम् ॥ ३७ ॥
विशोष्य चूर्णयित्वा च द्वौ भागौ गालयेत्ततः ।

रोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ॥ ३८ ॥
कषाये दशमूलस्य तं भागं भावितं पुनः ।
शुष्कं चूर्णं पुनः कृत्वा ततः पाणितलं पिबेत् ॥ ३९ ॥
मस्तुमूत्रसुरामण्डकोलधात्रीफलाम्बुभिः ।
तिल्वकस्य कषायेण कल्केन च सशर्करः ॥ ४० ॥
सघृतः साधितो लेहः स च श्रेष्ठं विरेचनम् ।
सुधा भिनत्ति दोषाणां महान्तमपि सञ्चयम् ॥ ४१ ॥
आश्वेव कष्टविभ्रंशान्नैव तां कल्पयेदतः ।
मृदौ कोष्ठेऽबले बाले स्थविरे दीर्घरोगिणि ॥ ४२ ॥
कल्प्या गुल्मोदरगरत्वग्रोगमधुमेहिषु ।
पाण्डौ दूषिविषे शोफे दोषविभ्रान्तचेतसि ॥ ४३ ॥
सा श्रेष्ठा कण्टकैस्तीक्ष्णैर्बहुभिश्च समाचिता ।
द्विवर्षां वा त्रिवर्षां वा शिशिरान्ते विशेषतः ॥ ४४ ॥
तां पाटयित्वा शस्त्रेण क्षीरमुद्धारयेत्ततः ।
विल्वादीनां बृहत्योर्वा क्वाथेन सममेकशः ॥ ४५ ॥
मिश्रयित्वा सुधाक्षीरं ततोऽङ्गारेषु शोषयेत् ।
पिबेत् कृत्वा तु गुटिकां मस्तुमूत्रसुरादिभिः ॥ ४६ ॥
त्रिवृतादीन्नववरां स्वर्णक्षीरीं ससातलाम् ।
सप्ताहं स्नुक्पयःपीतान् रसेनाज्येन वा पिबेत् ॥ ४७ ॥
तद्वद्गोषोत्तमाकुम्भनिकुम्भादीन् गुड़ाम्बुना ।
नातिशुष्कं फलं ग्राह्यं शङ्खिन्या निस्तुषीकृतम् ॥ ४८ ॥
सप्तलायास्तथा मूलं ते तु तीक्ष्णविकाषिणी ।
श्लेष्मामयोदरगरश्वयथ्वादिषु कल्पयेत् ॥ ४९ ॥
अक्षमात्रं तयोः पिण्डं मदिरालवणान्वितम् ।
हृद्रोगे वातकफजे तद्वद्गुल्मे प्रयोजयेत् ॥ ५० ॥
दन्तिदन्तस्थिरं स्थूलं मूलं दन्तीद्रवन्तिजम् ।

आताम्रश्यावतीक्ष्णोष्णमाशुकारि विकाशि च ॥ ५१ ॥
गुरुप्रकोपि वातस्य पित्तश्लेष्मविलायनम् ।
तत्क्षौद्रपिप्पलीलिप्तं स्वेद्यं मृद्दर्भवेष्टितम् ॥ ५२ ॥
शोष्यं मन्दातपेऽग्न्यर्कौ हतो ह्यस्य विकासिताम् ।
तत्पिबेन्मस्तुमदिरातक्रपीलुरसासवैः ॥ ५३ ॥
अभिष्यन्नतनुर्गुल्मी प्रमेही जठरी गरी ।
गोमूत्रगाजरसैः पाण्डुः क्रिमिकोष्ठी भगन्दरी ॥ ५४ ॥
सिद्धं तत्क्वाथकल्काभ्यां दशमूलरसेन च ।
विसर्पविद्रध्यलजीकक्षादाहान् जयेद् घृतम् ॥ ५५ ॥
तैलं तु गुल्ममेहार्शो विबन्धकफमारुतान् ।
महास्नेहः शकृच्छुक्रवातसङ्गानिलव्यथाः ॥ ५६ ॥
विरेचने मुख्यतमा नवैते त्रिवृतादयः ।
हरीतकीमपि त्रिवृद्विधानेनोपकल्पयेत् ॥ ५७ ॥
गुडस्याष्टपले पथ्या विंशतिः स्यात्पलं पलम् ।
दन्तीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश ॥ ५८ ॥
प्रकल्प्य मोदकानेवं दशमे दशमेऽहनि ।
उष्णाम्भोऽनुपिबेत्खादेत्तान् सर्वान्विधिनाऽमुना ॥ ५९ ॥
एते निःपरिहाराः स्युः सर्वव्याधिनिवर्हणाः ।
विशेषाद्ग्रहणीपाण्डुकण्डूकोठार्शसां हिताः ॥ ६० ॥
अल्पस्यापि महार्थत्वं प्रभूतस्याल्पकर्मताम् ।
कुर्य्यात् संश्लेषविश्लेषकालसंस्कारयुक्तिभिः ॥ ६१ ॥
[illegible]सराम्रातकद्राडिमैलासितापलामाक्षिकमातुलिङ्गैः ।
[illegible]व तैस्तैश्च मनोऽनुकूलैर्युक्तानि देयानि विरेचनानि ॥ ६२ ॥

---

## तृतीयोऽध्यायः ।

अथातो वमनविरेचनव्यापत्सिद्धिं व्याख्यास्यामः ।

वमनं मृदुकोष्ठेन क्षुद्वताल्पकफेन वा।
अतितीक्ष्णहिमस्तोकमजीर्णे दुर्बलेन वा ॥ १ ॥
पीतं प्रयात्यधस्तस्मिन्निष्टहानिर्मलोदयः।
वामयेत्तं पुनः स्निग्धं स्मरन् पूर्वमतिक्रमम् ॥ २ ॥
अजीर्णिनः श्लेष्मवतो व्रजत्यूर्द्धं विरेचनम्।
अतितीक्ष्णोष्णलवणमहृद्यमतिभूरि वा।
तत्र पूर्वोदिता व्यापत्सिद्धिश्च न तथापि चेत् ॥ ३ ॥
आशये तिष्ठति ततस्तृतीयं नावचारयेत्।
अन्यत्र सात्म्यात् हृद्याद्वा भेषजान्निरपायतः ॥ ४ ॥
अस्निग्धस्विन्नदेहस्य पुराणं रूक्षमौषधम्।
दोषानुत्क्लेश्य निर्हर्त्तुमशक्तं जनयेद्गदान् ॥ ५ ॥
विभ्रंशं श्वयथुं हिध्मां तमसो दर्शनं तृषम्।
पिण्डिकोद्वेष्टनं कण्डूमूर्वोः सादं विवर्णताम् ॥ ६ ॥
स्निग्धस्विन्नस्य वात्यल्पं दीप्ताग्नेर्जीर्णमौषधम्।
शीतैर्वा स्तब्धमामे वा समुत्क्लेश्य हरेन्मलान् ॥ ७ ॥
तानेव जनयेद्रोगानयोगः सर्व एव सः।
तं तैललवणाभ्यक्तं स्विन्नं प्रस्तरशङ्करैः ॥ ८ ॥
निरूढं जाङ्गलरसैर्भोजयित्वाऽनुवासयेत्।
फलमागधिकादारुसिद्धतैलेन मात्रया ॥ ९ ॥
स्निग्धं वातहरैः स्नेहैः पुनस्तीक्ष्णेन शोधयेत्।
बहुदोषस्य रूक्षस्य मन्दाग्नेरल्पमौषधम् ॥ १० ॥
सोदावर्त्तस्य चोत्क्लेश्य दोषान्मार्गं निरुध्य तैः।
भृशमाध्मापयेन्नाभिं पृष्ठपार्श्वशिरोरुजम् ॥ ११ ॥
श्वासं विण्मूत्रवातानां सङ्गं कुर्य्याच्च दारुणम्।
अभ्यङ्गस्वेदवर्त्त्यादिसनिरूहानुवासनम् ॥ १२ ॥
उदावर्त्तहरं सर्वं कर्म्माध्मातस्य शस्यते।

पञ्चमूलयवक्षारवचाभूतिकसैन्धवैः ॥ १३ ॥
यवागूः सक्तताशूलविबन्धानाहनाशनी ।
पिप्पलीदाड़िमक्षारहिङ्गुशुण्ठ्यम्लवेतसान् ॥ १४ ॥
ससैन्धवान् पिबेत् मद्यैः सर्पिषोष्णोदकेन वा ।
प्रवाहिकापरिस्रावे वेदनापरिकर्त्तने ॥ १५ ॥
पीतौषधस्य वेगानां निग्रहान्मारुतादयः ।
कुपिता हृदयं गत्वा घोरं कुर्वन्ति हृद्ग्रहम् ॥ १६ ॥
हिध्मापार्श्वरुजाकासदैन्यलालाक्षिविभ्रमैः ।
जिह्वां खादति निःसंज्ञो दन्तान् कटकटाययन् ॥ १७ ॥
न गच्छेद्विभ्रमं तत्र वामयेदाशु तं भिषक् ।
मधुरैः पित्तमूर्च्छार्त्तं कटुभिः कफमूर्च्छितम् ॥ १८ ॥
पाचनीयैस्ततश्चास्य दोषशेषं विपाचयेत् ।
कायाग्निञ्च बलं चास्य क्रमेणाभिप्रवर्त्तयेत् ॥ १९ ॥
पवनेनातिवमतो हृदयं यस्य पीड्यते ।
तस्मै स्निग्धाम्ललवणं दद्यात्पित्तकफेऽन्यथा ॥ २० ॥
पीतौषधस्य वेगानां निग्रहेण कफेन वा ।
रुद्धोऽति वा विशुद्धस्य गृह्णात्यङ्गानि मारुत ॥ २१ ॥
स्तम्भवेपथुनिस्तोदसादोद्वेष्टार्त्तिभेदनैः ।
तत्र वातहरं सर्वं स्नेहस्वेदादि शस्यते ॥ २२ ॥
बहुतीक्ष्णं क्षुधार्त्तस्य मृदुकोष्ठस्य भेषजम् ।
हत्वाऽऽशु विट्पित्तकफान् धातूनास्रावयेद्द्रवान् ॥ २३ ॥
तत्रातियोगमधुरैः शेषमौषधमुल्लिखेत् ।
यो याति वमनैरेको विरेके वमनं मृदु ॥ २४ ॥
परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तम् ।
अञ्जनं चन्दनोशीरमज्जासृक्शर्करोदकम् ॥ २५ ॥
लाजचूर्णैः पिबेन्मन्थमतियोगहरं परम् ।

वमनस्यातियोगे तु शीताम्बुपरिषेचितः ॥ २६ ॥
पिबेत् फलरसैर्मन्थं सघृतक्षौद्रशर्करम् ।
सोद्गारायां भृशं छर्द्यां मूर्वाया धान्यमुस्तयोः ॥ २७ ॥
समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ।
वमनेऽन्तःप्रविष्टायां जिह्वायां कवलग्रहाः ॥ २८ ॥
स्निग्धाम्ललवणा हृद्या यूषमांसरसा हिताः ।
फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः ॥ २९ ॥
निःसृतान्तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत् ।
वाग्ग्रहानिलरोगेषु घृतमांसोपसाधिताम् ॥ ३० ॥
यवागूं तनुकां दद्यात् स्नेहस्वेदौ च कालवित् ।
अतियोगाच्च भेषज्यं जीवं हरति शोणितम् ॥ ३१ ॥
तज्जीवादानमित्युक्तमादत्ते जीवितं यतः ।
शुने काकाय वा दद्यात्तेनान्नमसृजा सह ॥ ३२ ॥
भुक्ते तस्मिन् वदेज्जीवमभुक्ते पित्तमादिशेत् ।
शुक्लं वा भावितं वस्त्रमावानं कोष्णवारिणा ॥ ३३ ॥
प्रक्षालितं विवर्णं स्यात्पित्ते शुद्धन्तु शोणिते ।
तृष्णामूर्च्छामदार्त्तस्य कुर्य्यादामरणं क्रियाम् ॥ ३४ ॥
रक्तपित्तातिसारघ्नीं तस्याशु प्राणरक्षणीम् ।
मृगगोमहिषाजानां सद्यस्कं जीवतामसृक् ॥ ३५ ॥
पिबेज्जीवाभिसन्धानं जीवं तद्ध्याशु यच्छति ।
तदेव दर्भमृदितं रक्तं बस्तौ निषेचयेत् ॥ ३६ ॥
श्यामाकाश्मर्य्यमधुकदूर्वोशीरैः शृतं पयः ।
घृतमण्डाञ्जनयुतं बस्तिं वा योजयेद्धिमम् ॥ ३७ ॥
पिच्छाबस्तिं सुशीतं वा घृतमण्डानुवासनम् ।
गुदं भ्रष्टं कषायैश्च स्तम्भयित्वा प्रवेशयेत् ।
विसंज्ञं श्रावयेत्साम वेणुगीतादिनिस्वनम् ॥ ३८ ॥

## चतुर्थोऽध्यायः ।

अथातो दोषहरणसाकल्यं वस्तिकल्पं व्याख्यास्यामः ।

लां गुडूचीं त्रिफलां सरास्नां द्विपञ्चमूलञ्च पलोन्मितानि ।
ष्टौ पलान्यर्द्धतुलाञ्च मांसाच्छागात्पचेदप्सु चतुर्थशेषम् ॥१॥
तीयवानीफलबिल्वकुष्ठवचाशताह्वाघनपिप्पलीनाम् ।
ल्कै र्गुड़क्षौद्रघृतैः सतैलैर्युक्तः सुखोष्णो लवणान्वितश्च ॥ २ ॥
स्तिः परं सर्वगदप्रमाथी स्वस्थे हितो जीवनबृंहणश्च ।
स्तौ च यस्मिन् पठितो न कल्कः सर्वत्र दद्यादमुमेव तत्र ॥३॥
द्विपञ्चमूलस्य रसोऽम्लयुक्तः सच्छागमांसस्य स पूर्वकल्कः ।
स्नेहयुक्तः प्रवरो निरूहः सर्वानिलव्याधिहरः प्रदिष्टः ॥ ४ ॥
ला पटोलो लघुपञ्चमूलं त्रायन्तिकैरण्डयवात् सुसिद्धात् ।
स्योरसाच्छागरसार्द्धयुक्तं साध्यः पुन प्रस्थसमः स यावत् ॥५॥
ायङ्गुकृष्णाघनकल्कयुक्तः सतैलसर्पिर्मधुसैन्धवश्च ।
ाद्दीपनो मांसबलप्रदश्च चक्षुर्बलं चोपदधाति सद्यः ॥ ६ ॥
रण्डमूलात् त्रिपलं पलांशात्तथा पलांशं लघुपञ्चमूलम् ।
स्नाबलाच्छिन्नरुहाश्वगन्धापुनर्नवारग्वधदेवदारु ॥ ७ ॥
लानि चाष्टौ सलिलाढ़काभ्यां विपाचयेदष्टमशेषितेऽस्मिन् ।
वाशताह्वाहपुषाप्रियङ्गुयष्टीकणावत्सकबीजमुस्तम् ॥ ८ ॥
द्यात् सुपिष्टं सहताक्ष्यशैलमक्षप्रमाणं लवणांशयुक्तम् ।
माक्षिकस्तैलयुतः समूत्रो वस्तिर्जयेल्लेखनदीपनोऽसौ ॥ ९ ॥
ङ्घोरुपादत्रिकपृष्ठकोष्ठहृद्गुह्यशूलं गुरुतां विबन्धम् ।
ल्माश्मवर्ध्मग्रहणीगुदोत्थांस्तांस्तांश्च रोगान् कफवातजातान् १०
ध्याह्वरोध्राभयचन्दनैश्च शृतं पयोऽग्र्यं कमलोत्पलैश्च ।
शर्कराक्षौद्रघृतं सुशीतं पित्तामयान् हन्ति सजीवनीयम् ॥११
क्षां वृषं लोहितिकामनन्तां बलां कनीयस्तृणपञ्चमूल्यौ ।

गोपाङ्गनाचन्दनपद्मकर्धिमयष्ट्याह्वरोध्राणि पलार्द्धकानि ॥ १२ ॥
निःक्वाथ्य तोयेन रसेन तेन शृतं पयोऽर्द्धाढकमम्बुहीनम् ।
जीवन्तिमेदर्धिवरीविदारीवीराद्विकाकोलिकसेरुकाभिः ॥१३॥
सितोपलाजीवकपद्मरेणुप्रपौण्डरीकोत्पलपुण्डरीकैः ।
लोहात्मगुप्तामधुयष्टिकाभिर्नागाह्वगुञ्जातकचन्दनैश्च ॥ १४ ॥
पिष्टैर्घृतक्षौद्रयुतैर्निरूहं ससैन्धवं शीतलमेव दद्यात् ।
प्रत्यागते धन्वरसेन शालीन् क्षीरेण वाऽद्यात्परिषिक्तगात्रः ॥१५
दाहातिसारप्रदरास्रपित्तहृत्पाण्डुरोगान् विषमज्वरञ्च ।
सगुल्ममूत्रग्रहकामलादीन् सर्वामयान् पित्तकृतान्निहन्ति ॥१६
कोशातकारग्वधदेवदारुमूर्वाश्वदंष्ट्राकुटजार्कपाठाः ।
पक्त्वा कुलत्थान् बृहतीञ्च तोये रसस्य तस्य प्रसृता दश स्युः १७
तान् सर्षपैलामदनैः सकुष्ठैरक्षप्रमाणैः प्रसृतैश्च युक्तान् ।
क्षौद्रस्य तैलस्य फलाह्वयस्य क्षारस्य तैलस्य ससर्पिषश्च ॥ १८ ॥
दद्यान्निरूहं कफरोगिताय मन्दाग्नये चाशनविद्विषे च ।
वक्ष्ये मृदून् स्नेहकृतो निरूहान् सुखोचितानां प्रसृतैः पृथक्स्युः१

अथेमान् सुकुमाराणां निरूहान् स्नेहवान् मृदून् ।
कर्मणा विप्लुतानान्तु वक्ष्यामि प्रसृतैः पृथक् ॥ २० ॥
क्षीराद् द्वौ प्रसृतौ कार्य्यौ मधुतैलघृतात् त्रयः ।
खजेन मथितो बस्तिर्वातघ्नो बलवर्णकृत् ॥ २१ ॥
एकैकः प्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषाम् ।
बिल्वादिमूलक्वाथाद् द्वौ कौलत्थाद् द्वौ स वातजित् ॥२२
पटोलनिम्बभूतीकरास्नासप्तच्छदाम्भसः ।
प्रसृतः पृथगाज्याच्च वस्तिः सर्षपकल्कवान् ॥ २३ ॥
सपञ्चतिक्तोऽभिष्यन्दकृमिकुष्ठप्रमेहहा ।
चत्वारस्तैलगोमूत्रदधिमण्डाम्लकाञ्जिकात् ॥ २४ ॥
प्रसृताः सर्षपैः पिष्टैर्विट्सङ्गानाहभेदनः ।

पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषाम् ॥ २५ ॥
एकैकः प्रसृतो वस्तिः कृष्णाकल्को वृषत्वकृत् ।
सिद्धवस्तीनतो वक्ष्ये सर्वदा यान् प्रयोजयेत् ॥ २६ ॥
निर्व्यापदो बहुफलान् बलपुष्टिकरान् सुखान् ।
मधुतैले समे कर्षः सैन्धवाद्द्विपिचुर्मिसिः ॥ २७ ॥
एरण्डमूलक्वाथेन निरूहो मधुतैलिकः ।
रसायनं प्रमेहार्शःकृमिगुल्मान्त्रवृद्धिनुत् ॥ २८ ॥
सयष्टिमधुकश्चैव चक्षुष्यो रक्तपित्तजित् ।
यापनो घनकल्केन मधुतैलरसाज्यवान् ॥ २९ ॥
पायुजङ्घोरुवृषणवस्तिमेहनशूलजित् ।
प्रसृतांशैर्घृतक्षौद्रवसातैलैः प्रकल्पयेत् ॥ ३० ॥
एरण्डमूलनिःक्वाथो मधुतैलः ससैन्धवः ।
एष युक्तरथो वस्तिः सवचापिप्पलीफलः ॥ ३१ ॥
सक्वाथो मधुषड्ग्रन्थाशताह्वाहिङ्गुसैन्धवः ।
सुरदारुवचारास्नावस्तिर्दोषहरः परः ॥ ३२ ॥
पञ्चमूलस्य निःक्वाथस्तैलं मागधिका मधु ।
ससैन्धवः समधुकः सिद्धवस्तिरिति स्मृतः ॥ ३३ ॥
द्विपञ्चमूलत्रिफलाफलबिल्वानि पाचयेत् ।
गोमूत्रेण च पिष्टैश्च पाठावत्सकतोयदैः ॥ ३४ ॥
सफलैः क्षौद्रतैलाभ्यां क्षारेण लवणेन च ।
युक्तो वस्तिः कफव्याधिपाण्डुरोगविसूचिषु ॥ ३५ ॥
शुक्रानिलविबन्धेषु वस्त्याटोपे च पूजितः ।
मुस्तापाठामृतैरण्डबलारास्नापुनर्नवा ॥ ३६ ॥
मञ्जिष्ठारग्वधोशीरत्रायमाणाक्षरोहिणीः ।
कनीयः पञ्चमूलञ्च पालिकं मदनाष्टकम् ॥ ३७ ॥
जलाढ़के पचेत्तच्च पादशेषं परिस्रुतम् ।

क्षीरद्विप्रस्थसंयुक्तं क्षीरशेषं पुनः पचेत् ॥ ३८ ॥
सपादजाङ्गलरसः ससर्पिर्मधुसैन्धवः ।
पिष्टैर्यष्टिमिसिश्यामाकलिङ्गकरसाञ्जनैः ॥ ३९ ॥
वस्तिः सुखोष्णो मांसाग्निबलशुक्रविवर्द्धनः ।
वातासृङ्मोहमेहार्शो गुल्मविण्मूत्रसंग्रहम् ॥ ४० ॥
विषमज्वरविसर्पवर्ध्माध्मानप्रवाहिकाः ।
वङ्क्षणोरुकटीकुक्षिमन्याश्रोत्रशिरोरुजः ॥ ४१ ॥
हन्यादसृग्दरोन्मादशोफकासाश्मकुण्डलान् ।
चक्षुष्यः पुत्रदो राज्ञां यापनानां रसायनम् ॥ ४२ ॥
मृगाणां लघुवभ्रूणां दशमूलस्य चाम्भसा ।
हपुषामिसिगान्धेयीकल्कैर्वातहरः परम् ॥ ४३ ॥
निरूहोऽत्यर्थवृष्यश्च महास्नेहसमन्वितः ।
मयूरं पक्षपित्तान्त्रपादविट्तुण्डवर्जितम् ॥ ४४ ॥
लघुना पञ्चमूलेन पालिकेन समन्वितम् ।
पक्त्वा क्षीरजले क्षीरशेषं सघृतमाक्षिकम् ॥ ४५ ॥
तद्विदारीकणायष्टीशताह्वाफलकल्कवत् ।
वस्तिरीषत्पटुयुतः परमं बलशुक्रकृत् ॥ ४६ ॥
कल्पनेयं पृथक् कार्य्या तित्तिरिप्रभृतिष्वपि ।
विष्किरेषु समस्तेषु प्रतुदप्रसहेषु च ॥ ४७ ॥
जलचारिषु तद्वच्च मत्स्येषु क्षीरवर्जिता ।
गोधानकुलमर्जारशल्यकोन्दुरजं पलम् ॥ ४८ ॥
पृथक् दशपलं क्षीरे पञ्चमूलञ्च साधयेत् ।
तत्पयः फलवैदेहीकल्काढ्यलवणान्वितम् ॥ ४९ ॥
ससितातैलमध्वाज्यो वस्तिर्योज्यो रसायनम् ।
व्यायाममथितोरस्कक्षीणेन्द्रिय बलौजसाम् ॥ ५० ॥
विबद्धशुक्रविण्मूत्रखुड़वातविकारिणाम् ।

गजवाजिरथक्षोभभग्नजर्जरितात्मनाम् ॥ ५१ ॥
पुनर्नवत्वं कुरुते वाजीकरणसत्तमः ।
सिद्धेन पयसा भोज्यमात्मगुप्तोच्चटे क्षुरैः ॥ ५२ ॥
स्नेहांश्चायन्त्रणान् सिद्धान् सिद्धद्रव्यैः प्रकल्पयेत् ।
दोषघ्नाः सपरीहारा वक्ष्यन्ते स्नेहवस्तयः ॥ ५३ ॥
दशमूलं बलां रास्नामश्वगन्धां पुनर्नवाम् ।
गुडूच्येरण्डभूतीकभार्ङ्गीं वृषकरोहिषम् ॥ ५४ ॥
शतावरीं सहचरं काकनासां पलांशकम् ।
यवमाषातसीकोलकुलत्थान् प्रसृतोन्मितान् ॥ ५५ ॥
वह्ने विपाच्य तोयस्य द्रोणशेषेण तेन च ।
पचेत्तैलाढकं पेष्यैर्जीवनीयैः पलोन्मितैः ॥ ५६ ॥
अनुवासनमित्येतत्सर्ववातविकारनुत् ।
अनुपानं वसा तद्वज्जीवनीयोपसाधिता ॥ ५७ ॥
शताह्वाचिरिविल्वाम्लैस्तैलं सिद्धं समीरणे ।
सैन्धवेनाग्निवर्णेन तप्तं वाऽनिलजिद् घृतम् ॥ ५८ ॥
जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ।
शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ॥ ५९ ॥
स्वगुप्तां चीरकाकोलीं कर्कटाख्यां शठीं वचाम् ।
पिष्ट्वा तैलघृतक्षीरे साधयेत्तच्चतुर्गुणे ॥ ६० ॥
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्द्धनम् ।
रजःशुक्रामयहरं पुत्रीयमनुवासनम् ॥ ६१ ॥
सैन्धवं मदनं कुष्ठं शताह्वानिचुलौ वचा ।
ह्रीवेरं मधुकं भार्ङ्गीं देवदारुसकट्फलम् ॥ ६२ ॥
नागरं पुष्करं मेदा चविका चित्रकः शठी ।
विडङ्गातिविषा श्यामा हरेणुर्नीलिनी स्थिरा ॥ ६३ ॥
विल्वाजमोदचपला दन्ती रास्ना च तैः समैः ।

माध्यमेरण्डतैलं वा तैलं वा कफरोगनुत् ॥ ६४ ॥
वर्ध्मोदावर्त्तगुल्मार्शः प्लीहमेहाढ्यमारुतान् ।
आनाहमश्मरीं चाशु हन्यात्तदनुवासनम् ॥ ६५ ॥
साधितं पञ्चमूलेन तैलं बिल्वादिनाऽथवा ।
कफघ्नं कल्पयेत्तैलं द्रव्यैर्वा कफघातिभिः ॥ ६६ ॥
पलैरष्टगुणैश्चाम्लैः सिद्धमन्वासनं कफे ।
मृदुवस्तिजड़ीभूते तीक्ष्णोऽन्यो वस्तिरिष्यते ॥ ६७ ॥
तीक्ष्णैर्विकर्षितः स्निग्धो मधुरः शिशिरो मृदुः ।
तीक्ष्णत्वं मूत्रपील्वग्निलवणक्षारसर्षपैः ।
प्राप्तकालं विधातव्यं घृतक्षीरैस्तु मार्दवम् ॥ ६८ ॥
बलकालरोगदोषप्रकृतीः प्रविभज्य योजितो वस्तिः ।
स्वैः स्वैरौषधवर्गैः स्वान् स्वान् रोगान्निवर्त्तयति ॥ ६९ ॥
उष्णार्त्तानां शीतांश्छीतार्त्तानां तथा सुखोष्णांश्च ।
तद्योग्यौषधयुक्तान् वस्तीन् सन्तर्क्य युञ्जीत ॥ ७० ॥
वस्तीन्न बृंहणीयान् दद्याद्व्याधिषु विशोधनीयेषु ।
मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्त्ताः ॥ ७१ ॥
न क्षीणक्षतदुर्बलमूर्च्छितकृशशुष्कशुद्धदेहानाम् ।
दद्याद्विशोधनीयान् दोषनिबद्धायुषो ये च ॥ ७२ ॥

---

## पञ्चमोऽध्यायः ।

अथातो वस्तिव्यापत्सिद्धिं व्याख्यास्यामः ।

अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः ।
शीतोऽल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा ॥ १ ॥
वस्तिः सङ्क्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ।
करोत्ययोगं तेन स्याद्वातमूत्रशकृद्ग्रहः ॥ २ ॥

नाभिवस्तिरुजादाहो हृल्लेपश्वयथुर्गुदे ।
कण्डूर्गण्डानि वैवर्ण्यमरतिर्वह्निमार्दवम् ॥ ३ ॥
क्वाथद्वयं प्राग्विहितं मध्यदोषेऽतिसारिणि ।
उष्णस्य तस्मादेकस्य तत्र पानं प्रशस्यते ॥ ४ ॥
फलवर्त्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम् ।
विल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान् ॥ ५ ॥
सुरादिमांस्तत्र वस्तिः स प्राक्पेयस्तमानयेत् ।
युक्तोऽल्पवीर्य्यो दोषाढ्यो रूक्षे क्रूराशयेऽथवा ॥ ६ ॥
वस्तिर्दोषावृतो रुद्धमार्गो रुन्ध्यात्समीरणम् ।
सविमार्गोऽनिलः कुर्य्यादाध्मानं मर्मपीड़नम् ॥ ७ ॥
विदाहं गुदकोष्ठस्य मुष्कवङ्क्षणवेदनाम् ।
रुणद्धि हृदयं शूलैरितश्चेतश्च धावति ॥ ८ ॥
स्वभ्यक्तस्विन्नगात्रस्य तत्र वर्त्तिं प्रयोजयेत् ।
विल्वादिश्च निरूहः स्यात् पीलुसर्षपमूत्रवान् ॥ ९ ॥
सरलामरदारुभ्यां साधितं वाऽनुवासनम् ।
कुर्वतो वेगसंरोधं पीड़ितो वाऽतिमात्रया ॥ १० ॥
अस्निग्धलवणोष्णो वा वस्तिरल्पोऽल्पभेषजः ।
मृदुर्वा मारुतेनोर्ध्वं विक्षिप्तो मुखनासिकात् ॥ ११ ॥
निरेति मूर्च्छाहृल्लासतृड्दाहादीन् प्रवर्त्तयन् ।
मूर्च्छाविकारं दृष्ट्वास्य सिञ्चेच्छीताम्बुना मुखम् ॥ १२ ॥
व्यजेदाक्रमनाशाच्च प्राणायामञ्च कारयेत् ।
पृष्ठपार्श्वोदरं मृज्यात्करैरुष्णैरधोमुखम् ॥ १३ ॥
केशेषूत्क्षिप्य धुन्वीत भीषयेद्व्यालदंष्ट्रिभिः ।
शस्त्रोल्काराजपुरुषैर्वस्तिरेति तथा ह्यधः ॥ १४ ॥
पाणिवस्त्रैर्गलापीड़ं कुर्य्यान्न म्रियते यथा ।
प्राणोदाननिरोधाद्धि सुप्रसिद्धतरायनः ॥ १५ ॥

अपानः पवनो वस्तिं तमाश्वेवापकर्षति ।
कुष्ठक्रमुककल्कञ्च पाययेताम्लसंयुतम् ॥ १६ ॥
औष्ण्यात्तैक्ष्ण्यात्सरत्वाच्च वस्तिं सोऽस्यानुलोमयेत् ।
गोमूत्रेण त्रिवृत्पथ्याकल्कं चाधोऽनुलोमनम् ॥ १७ ॥
पक्काशयस्थिते स्विन्ने निरूहो दशमूलिकः ।
यवकोलकुलत्थैश्च विधेयो मूत्रसाधितैः ॥ १८ ॥
वस्तिर्गोमूत्रसिद्धैर्वा साम्लता वंशपल्लवैः ।
पूतीकरञ्जत्वक्पत्रशठीदेवाह्वरोहिषैः ॥ १९ ॥
सतैलगुड़सिन्धूत्थविरेकौषधकल्कवान् ।
बिल्वादिपञ्चमूलेन सिद्धो वस्तिरुरः स्थिते ॥ २० ॥
शिरःस्थे नावनं धूमःप्रच्छाद्यं सर्षपैः शिरः ।
वस्तिरत्युष्णतीक्ष्णाम्लघनोऽतिस्वेदितस्य वा ॥ २१ ॥
अल्पे दोषे मृदौ कोष्ठे प्रयुक्तो वा पुनः पुनः ।
अतियोगत्वमापन्नो भवेत्कुच्छिरुजाकरः ॥ २२ ॥
विरेचनातियोगेन सतुल्याकृतिसाधनः ।
वस्तिः क्षाराम्लतीक्ष्णोष्णलवणः पैत्तिकस्य वा ॥ २३ ॥
गुदं दहन् लिखन् क्षिण्वन् करोत्यस्य परिस्रवम् ।
सविदग्धं स्रवत्यस्रं वर्णैः पित्तञ्च भूरिभिः ॥ २४ ॥
बहुशश्चातिवेगेन मोहं गच्छति सोऽसकृत् ।
रक्तपित्तातिसारघ्नी क्रिया तत्र प्रशस्यते ॥ २५ ॥
दाहादिषु त्रिवृत्कल्कं मृद्वीकावारिणा पिबेत् ।
तद्धि पित्तशकृद्वातान् हृत्वा दाहादिकान् जयेत् ॥ २६
विशुद्धश्च पिबेच्छीतां यवागूं शर्करायुताम् ।
युञ्ज्याद्वातिविरिक्तस्य क्षीणविट्कस्य भोजनम् ॥ २७ ॥
माषयूषेण कुल्माषान् पानं दध्यथवा सुराम् ।
सिद्धिर्वस्त्यापदामेवं स्नेहवस्तेस्तु वक्ष्यते ॥ २८ ॥

शीतोऽल्पो वाऽधिके वाते पित्तेत्युष्ण: कफे मृदु: ।
अतिभुक्ते गुरुर्वर्च: सव्ययेऽल्पबलस्तथा ॥ २९ ॥
दत्तस्तैराहतस्नेहो नायात्यभिभवादपि ।
स्तम्भोरुसदनाध्मानज्वरशूलाङ्गमर्दनै: ॥ ३० ॥
पार्श्वरुग्वेष्टनैर्विद्याद्वायुना स्नेहमावृतम् ।
स्निग्धाम्ललवणोष्णैस्तं रास्नापीतद्रुतैलिकै: ॥ ३१ ॥
सौवीरकसुराकोलकुलत्थयवसाधितै: ।
निरूहैर्निर्हरेत्सम्यक् समूत्रै: पञ्चमूलकै: ॥ ३२ ॥
ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत् ।
तृड्दाहरागसम्मोहवैवर्ण्यतमकज्वरै: ॥ ३३ ॥
विद्यात्पित्तावृतं स्वादुतिक्तैस्तं वस्तिभिर्हरेत् ।
तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवै: ॥ ३४ ॥
संमूर्च्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतम् ।
कषायतिक्तकटुकै: सुरामूत्रोपसाधितै ॥ ३५ ॥
फलतैलयुतै: साम्लैर्वस्तिभिस्तं विनिर्हरेत् ।
छर्दिमूर्च्छारुचिग्लानिशूलनिन्द्राङ्गमर्दनै: ॥ ३६ ॥
आमलिङ्गै: सदाहैस्तं विद्यादत्यशनावृतम् ।
कटूनां लवणानां च क्वाथैश्चूर्णैश्च पाचनम् ॥ ३७ ॥
मृदुर्विरेक: सर्वं च तत्रामविहितं हितम् ।
विण्मूत्रानिलसङ्गार्त्तिगुरुत्वाध्मानहृद्ग्रहै: ॥ ३८ ॥
स्नेह विड़ावृतं ज्ञात्वा स्नेहस्वेदै: सवर्त्तिभि: ।
श्यामाबिल्वादिसिद्धैश्च निरूहै: सानुवासनै: ॥ ३९ ॥
निर्हरेद्विधिना सम्यगुदावर्त्तहरेण च ।
अभुक्ते शूनपायौ वा पेयामात्राशितस्य च ॥ ४० ॥
गुदे प्रणिहित: स्नेहो वेगाद्धावत्यनावृत: ।
ऊर्ध्वं कायं तत: कण्ठादूर्ध्वेभ्य: खेभ्य एत्यपि ॥ ४१ ॥

मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान् ।
तत्सिद्धतैलो देयः स्यान्निरूहः सानुवासनः ॥ ४२ ॥
कण्ठादागच्छतस्तम्भकण्ठग्रहविरेचनैः ।
छर्दिघ्नोभिः क्रियाभिश्च तस्य कुर्य्यान्निवर्हणम् ॥ ४३ ॥
नापक्वं प्रणयेत् स्नेहं गुदं सद्युपलिम्पति ।
ततः कुर्य्यात्त्वगमोहकण्डूशोफान् क्रियाऽत्र वा ॥ ४४ ॥
तीक्ष्णो वस्तिस्तथा तैलमर्कपत्ररसे शृतम् ।
अनुच्छास्य तु बद्धे वा दत्ते निःशेष एव च ॥ ४५ ॥
प्रविश्य क्षुभितो वायुः शूलतोदकरो भवेत् ।
तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च ॥ ४६ ॥
द्रुतं प्रणीते निष्कृष्टे सहोत्क्षिप्त एव वा ।
स्यात्कटीगुदजङ्घोरुवस्तिस्तम्भार्त्तिभेदनम् ॥ ४७ ॥
भोजनं तत्र वातघ्नं स्वेदाभ्यङ्गाः सवस्तयः ।
पीड्यमानेऽन्तरा मुक्ते गुदे प्रतिहतोऽनिलः ॥ ४८ ॥
उरःशिरोरुजं सादमूर्वोश्च जनयेद् बली ।
वस्तिं स्यात्तत्र बिल्वादिफलैः श्यामादिमूत्रवान् ॥ ४९ ॥
अतिप्रपीड़ितः कोष्ठे तिष्ठत्यायाति वा गलम् ।
तत्र वस्तिर्विरेकश्च गलपीड़ादिकर्म च ॥ ५० ॥
वमनाद्यैर्विशुद्धस्य क्षामदेहबलानलम् ।
यथाण्डं तरुणं पूर्णं तैलपात्रं यथा तथा ॥ ५१ ॥
भिषक् प्रयत्नतो रक्षेत्सर्वस्मादपवादतः ।
दद्यान्मधुरहृद्यानि ततोऽम्ललवणौ रसौ ॥ ५२ ॥
स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ।
अन्योऽन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः ॥ ५३ ॥
व्यत्यासादुपयोगेन क्रमात्तं प्रकृतिं नयेत् ।
सर्वं सहः स्थिरबलो विज्ञेयः प्रकृतिं गतः ॥ ५४ ॥

## षष्ठोऽध्यायः ।

अथातो भेषजकल्पं व्याख्यास्यामः ।

धन्वसाधारणे देशे समे सन्मृत्तिके शुचौ ।
श्मशानचैत्यायतनश्वभ्रवल्मीकवर्जिते ॥ १ ॥
मृदौ प्रदक्षिणजले कुशरोहिषसंस्तृते ।
अफालकृष्टेऽनाक्रान्ते पादपैर्बलवत्तरैः ॥ २ ॥
शस्यते भेषजं जातं युक्तं वर्णरसादिभिः ।
जन्त्वदग्धं दवादग्धमविदग्धञ्च वैकृतैः ॥ ३ ॥
भूतैश्छायातपाम्ब्वाद्यैर्यथाकालञ्च सेवितम् ।
अवगाढमहामूलमुदीचीं दिशमाश्रितम् ॥ ४ ॥
अथ कल्याणचरितः श्राद्धः शुचिरुपोषितः ।
गृह्णीयादौषधं सुस्थं स्थितं काले च कल्पयेत् ॥ ५ ॥
सक्षीरं तदसम्पत्तावनतिक्रान्तवत्सरम् ।
ऋते गुड़घृतक्षौद्रधान्यकृष्णाविड़ङ्गतः ॥ ६ ॥
पयो वाष्कयणं ग्राह्यं विरमूत्रं तच्च नीरुजम् ।
वयो बलवतां धातुपिच्छशृङ्गखुरादिकम् ॥ ७ ॥
कषाययोनयः पञ्च रसा लवणवर्जिताः ।
रसः कल्कः शृतः शीतः फाण्टश्चेति प्रकल्पना ॥ ८ ॥
पञ्चधैव कषायाणां पूर्वं पूर्वं बलाधिका ।
सद्यः समुद्धृतात् क्षुण्णात् यः स्रवेत्पटपीड़ितात् ॥ ९ ॥
स्वरसः स समुद्दिष्टः कल्कः पिष्टो द्रवाप्लुतः ।
चूर्णोऽप्लुतः शृतः क्वाथः शीतो रात्रिं द्रवे स्थितः ॥ १० ॥
सद्योऽभिषुतपूतस्तु फाण्टस्तन्मानकल्पने ।
युञ्ज्याद्व्याध्यादिबलतस्तथा च वचनं मुनेः ॥ ११ ॥
मात्राया न व्यवस्थाऽस्ति व्याधिं कोष्ठं बलं वयः ।

आलोच्य देशकालौ च योज्या तद्वच्च कल्पना ॥ १२ ॥
मध्यन्तु मानं निर्दिष्टं स्वरसस्य चतुःपलम् ।
पेष्यस्य कर्षमालोड्यं तद्द्रवस्य पलत्रये ॥ १३ ॥
क्वाथं द्रव्यपले कुर्य्यात् प्रस्थार्धं पादशेषितम् ।
शीतं पले पलैः षड्भिः चतुर्भिश्च ततोऽपरम् ॥ १४ ॥
स्नेहपाकेत्वमानोक्तौ चतुर्गुणविवर्द्धितम् ।
कल्कस्नेहद्रवं योज्यम् अधीते शौनकः पुनः ॥ १५ ॥
स्नेहे सिद्ध्यति सिद्धाम्बुनिःक्वाथस्वरसैः क्रमात् ।
कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् ॥ १६ ॥
पृथक् स्नेहसमं दद्यात्पञ्चप्रभृति तु द्रवम् ।
नाङ्गुलिग्राहिता कल्के न स्नेहेऽग्नौ सशब्दता ॥ १७ ॥
वर्णादिसम्पच्च यदा तथैनं शीघ्रमाहरेत् ।
घृतस्य फेनोपशमस्तैलस्य तु तदुद्भवः ॥ १८ ॥
लेहस्य तन्तुमत्ताप्सु मज्जनं शरणं न च ।
पाकस्तु त्रिविधो मन्दश्चिक्कणः खरचिक्कणः ॥ १९ ॥
मन्दः कल्कसमे किञ्चिच्चिक्कणो मदनोपमे ।
किञ्चित्सीदति कृष्णे च वर्त्तमाने च पश्चिमः ॥ २० ॥
दग्धोऽत ऊर्द्धं निष्कार्य्यः स्यादामस्त्वग्निसादकृत् ।
मृदुर्नस्ये खरोऽभ्यङ्गे पाने बस्तौ च चिक्कणः ॥ २१ ॥
शाणं पाणितलं मुष्टिः कुड़वं प्रस्थमाढ़कम् ।
द्रोणं वहञ्च क्रमशो विजानीयाच्चतुर्गुणम् ॥ २२ ॥
द्विगुणं योजयेदार्द्रं कुड़वादि तथा द्रवम् ।
पेषणालोड़ने वारि स्नेहपाके च निर्द्रवे ॥ २३ ॥
कल्पयेत्सदृशान् भागान् प्रमाणं यत्र नोदितम् ।
कल्कीकुर्य्याच्च भैषज्यमनिरूपितकल्पनम् ॥ २४ ॥
द्वौ शाणौ वटकः कोलं वदरं द्रङ्क्षणश्च तौ ।

भचं पिचुः पाणितलं सुवर्णं कवलग्रहः ॥ २५ ॥
कर्षो बिड़ालपदकं तिन्दुकः पाणिमानिका ।
शुद्धान्यत्वमभिव्रेऽर्थे शुक्तिरष्टमिकापिचू ॥ २६ ॥
पलं प्रकुञ्चो विल्वश्च मुष्टिराम्रं चतुर्थिका ।
द्वे पले प्रसृतस्तौ द्वावञ्जलिस्तौ तु मानिका ॥ २७ ॥
आढ़कं भाजनं कंसो द्रोणः कुम्भो घटोर्मणम् ।
तुलापलशतं तानि विंशतिर्भार उच्यते ॥ २८ ॥
हिमवद्विन्ध्यशैलाभ्यां प्रायो व्याप्ता वसुन्धरा ।
सौम्यं पथ्यञ्च तत्राद्यमाग्नेयं वैन्ध्यमौषधम् ॥ २९ ॥

---

# अष्टाङ्गहृदयसंहितायां

## उत्तरस्थानम् ।



### प्रथमोऽध्यायः ।

अथातो बालोपचरणीयमध्यायं व्याख्यास्यामः ।

इति ह स्माहुरात्रेयादयो महर्षयः ।

जातमात्रं विशोध्योल्वाद्बालं सैन्धवसर्पिषा ।
प्रसूतिक्लेशितं चानु बलातैलेन सेचयेत् ॥ १ ॥
अश्मनोर्वादनं चास्य कर्णमूले समाचरेत् ।
अथास्य दक्षिणे कर्णे मन्त्रमुच्चारयेदिमम् ॥ २ ॥
"अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे ।"
"आत्मा वै पुत्रनामासि स जीव शरदां शतम्" ॥ ३ ॥

"शतायुः शतवर्षोऽसि दीर्घमायुरवाप्नुहि ।"
"नक्षत्राणि दिशो रात्रिरहश्च त्वाभिरक्षतु" ॥ ४ ॥
स्वस्थीभूतस्य नाभिञ्च सूत्रेण चतुरङ्गुलात् ।
बद्धोर्द्ध्वं वर्द्धयित्वा च ग्रीवायामवसञ्जयेत् ॥ ५ ॥
नाभिञ्च कुष्ठतैलेन सेचयेत् स्नपयेदनु ।
क्षीरवृक्षकषायेण सर्वगन्धोदकेन वा ॥ ६ ॥
कोष्णेन तप्तरजततपनीयनिमज्जनैः ।
ततो दक्षिणतर्जन्या तालून्नम्यावगुण्ठयेत् ॥ ७ ॥
शिरसि स्नेहपिचुना प्राश्यं चास्य प्रयोजयेत् ।
हरेणुमात्रं मेधायुर्बलार्थमभिमन्त्रितम् ॥ ८ ॥
ऐन्द्रीब्राह्मीवचाशङ्खपुष्पीकल्कं घृतं मधु ।
चामीकरवचाब्राह्मीताप्यपथ्या रजीकृताः ॥ ९ ॥
लिह्यान्मधुघृतोपेता हेमधात्रीरजोऽथवा ।
गर्भाम्भः सैन्धववता सर्पिषा वामयेत्ततः ॥ १० ॥
प्राजापत्येन विधिना जातकर्माणि कारयेत् ।
शिराणां हृदयस्थानां विवृतत्वात् प्रसूतितः ॥ ११ ॥
तृतीयेऽह्नि चतुर्थे वा स्त्रीणां स्तन्यं प्रवर्त्तते ।
प्रथमे दिवसे तस्मात्त्रिकालं मधुसर्पिषी ॥ १२ ॥
अनन्तामिश्रिते मन्त्रपाविते प्राशयेच्छिशुम् ।
द्वितीये लक्ष्मणासिद्धं तृतीये च घृतं ततः ॥ १३ ॥
प्राङ्निषिद्धस्तनस्यास्य तत्पाणितलसम्मितम् ।
स्तन्यानुपानं द्वौ कालौ नवनीतं प्रयोजयेत् ॥ १४ ॥
मातुरेव पिबेत् स्तन्यं तत्परं देहवृद्धये ।
स्तन्यधात्र्यावुभे कार्य्ये तदसम्पदि वत्सले ॥ १५ ॥
अव्यङ्गे ब्रह्मचारिण्यौ वर्णप्रकृतितः समे ।
नीरुजे मध्यवयसौ जीवद्वत्से न लोलुपे ॥ १६ ॥

हिताहारविहारेण यत्नादुपचरेच्च ते ।
शुक्क्रोधलङ्घनायासाः स्तन्यनाशस्य हेतवः ॥ १७ ॥
स्तन्यस्य सीधुवर्ज्याणि मद्यान्यानूपजा रसाः ।
क्षीरं क्षीरिण्यौषध्यः शोकादेश्च विपर्ययः ॥ १८ ॥
विरुद्धाहारभुक्तायाः क्षुधिताया विचेतसः ।
प्रदुष्टधातोर्गर्भिण्याः स्तन्यं रोगकरं शिशोः ॥ १९ ॥
स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ।
ह्रस्वेन पञ्चमूलेन स्थिरया वा सितायुतम् ॥ २० ॥
षष्ठीं निशां विशेषेण कृतरक्षाबलिक्रियाः ।
जागृयुर्बान्धवास्तस्य दधतः परमां मुदम् ॥ २१ ॥
दशमे दिवसे पूर्णे विधिभिः स्वकुलोचितैः ।
कारयेत् सूतिकोत्थानं नाम बालस्य चार्चितम् ॥ २२ ॥
बिभ्रतोऽङ्गैर्मनोह्लालरोचनागुरुचन्दनम् ।
नक्षत्रदेवतायुक्तं बान्धवं वा समाक्षरम् ॥ २३ ॥
ततः प्रकृतिभेदोक्तरूपैरायुःपरीक्षणम् ।
प्रागुदक्शिरसः कुर्याद् बालस्य ज्ञानवान् भिषक् ॥ २४ ॥
शुचिधौतोपधानानि निर्वलीनि मृदूनि च ।
शय्यास्तरणवासांसि रक्षोघ्नैर्धूपितानि च ॥ २५ ॥
काको विशस्तः शस्तश्च धूपने त्रिवृतान्वितः ।
जीवत्खड्गादिशृङ्गोत्थान् सदा बालः शुभान् मणीन् ॥२६॥
धारयेदौषधीः श्रेष्ठा ब्राह्मीमैन्द्रीजीवकादिकाः ।
हस्ताभ्यां ग्रीवया मूर्ध्ना विशेषात् सततं वचाम् ॥ २७ ॥
आयुर्मेधास्मृतिस्वास्थ्यकरीं रक्षोऽभिरक्षिणीम् ।
पञ्चमे मासि पुण्येऽह्नि धरण्यामुपवेशयेत् ॥ २८ ॥
षष्ठेऽन्नप्राशनं मासि क्रमात्तच्च प्रयोजयेत् ।
षट्सप्तमाष्टमासेषु नीरुजस्य शुभेऽहनि ॥ २९ ॥

कर्णौ हिमागमे विध्येत् धात्र्यङ्कस्थस्य सान्त्वयन् ।
प्राग्दक्षिणं कुमारस्य भिषग्वामं तु योषितः ॥ ३० ॥
दक्षिणेन दधत्सूचीं पालिमन्येन पाणिना ।
मध्यतः कर्णपीठस्य किञ्चिद्गण्डाश्रयं प्रति ॥ ३१ ॥
जरायुमात्रप्रच्छन्ने रविरश्म्यवभासिते ।
धृतस्य निश्चलं सम्यगलक्तकरसाङ्किते ॥ ३२ ॥
विध्येद्दैवकृते छिद्रे सकृदेकर्जु लाघवात् ।
नोर्ध्वं न पार्श्वतो नाधः शिरास्तत्र हि संश्रिताः ॥ ३३ ॥
कालिका मर्मरी रक्ता तद्व्यधाद्रागरुग् ज्वराः ।
सशोफदाहसंरम्भमन्यास्तम्भापतानकाः ॥ ३४ ॥
तेषां यथामयं कुर्य्याद् विभज्याशु चिकित्सितम् ।
स्थाने व्यधान्न रुधिरं न रुग्रागादिसम्भवः ॥ ३५ ॥
स्नेहाक्तं सूच्यनुस्यूतं सूत्रं चानु निधापयेत् ।
आमे तैलेन सिञ्चेच्च बहलां तद्वदारया ॥ ३६ ॥
विध्येत्पालीं हितभुजः सञ्चार्य्याथ स्थवीयसी ।
वर्त्तिस्त्र्यहात्ततो रूढं वर्द्धयेत शनैः शनैः ॥ ३७ ॥
अथैनं जातदशनं क्रमेणापनयेत् स्तनात् ।
पूर्वोक्तं योजयेत् क्षीरमन्नं च लघु बृंहणम् ॥ ३८ ॥
प्रियालमज्जमधुकमधुलाजासितोत्पलैः ।
अपस्तनस्य संयोज्यः प्रीणनो मोदकः शिशोः ॥ ३९ ॥
दीपनो बालबिल्वैलाशर्करालाजसक्तुभिः ।
संग्राही धातकीपुष्पशर्करालाजतर्पणैः ॥ ४० ॥
रोगांश्चास्य जयेत् सौम्यैर्भेषजैरविषादकैः ।
अन्यत्रात्ययिकाद्व्याधेर्विरेकं सुतरां त्यजेत् ॥ ४१ ॥
त्रासयेन्नाविधेयं तं त्रस्तं गृह्णन्ति हि ग्रहाः ।
वस्त्रवातात्परस्पर्शात् पालयेल्लङ्घिताच्च तम् ॥ ४२ ॥

ब्राह्मीसिद्धार्थकवचासारिवाकुष्ठसैन्धवैः ।
सकणैः साधितं पीतं वाङ्मेधास्मृतिकृद् घृतम् ॥ ४३ ॥
आयुष्यं पाप्मरक्षोघ्नं भूतोन्मादनिबर्हणम् ।
वचेन्दुलेखा मण्डूकी शङ्खपुष्पी शतावरी ॥ ४४ ॥
ब्रह्मसोमामृताब्राह्मीः कल्कीकृत्य पलांशिकाः ।
अष्टाङ्गं विपचेत्सर्पिः प्रस्थं क्षीरं चतुर्गुणम् ॥ ४५ ॥
तत्पीतं धन्यमायुष्यं वाङ्मेधास्मृतिबुद्धिकृत् ।
पजाक्षीराभयाव्योषपाठोग्राशिग्रुसैन्धवैः ॥ ४६ ॥
सिद्धं सारस्वतं सर्पिर्वाङ्मेधास्मृतिवह्निकृत् ।
वचामृताशठीपथ्याशङ्खिनीवेल्लनागरैः ॥ ४७ ॥
अपामार्गेण च घृतं साधितं पूर्ववद्गुणैः ।
हेमश्वेतवचाकुष्ठमर्कपुष्पी सकाञ्चना ॥ ४८ ॥
हेममत्स्याक्षकः शङ्खः कैडर्यः कनकं वचा ।
चत्वार एते पादोक्ताः प्राश्या मधुघृतप्लुताः ॥ ४९ ॥
वर्षं लीढ़ा वपुर्मेधाबलवर्णकराः शुभाः ।
वचायष्ट्याह्वसिन्धूत्थपथ्यानागरदीप्यकैः ॥ ५० ॥
शुद्ध्यते वाग्हविर्लीढ़ैः सकुष्ठकणजीरकैः ।

---

## द्वितीयोऽध्यायः ।

अथातो बालामयप्रतिषेधं व्याख्यास्यामः ।
त्रिविधः कथितो बालः क्षीरान्नोभयवर्त्तनः ।
स्वास्थ्यं ताभ्यामदुष्टाभ्यां दुष्टाभ्यां रोगसम्भवः ॥ १ ॥
यदद्भिरेकतां याति न च दोषैरधिष्ठितम् ।
तद्विशुद्धं पयो वाताद्दुष्टं तु प्लवतेऽम्भसि ॥ २ ॥
कषायं फेनिलं रूक्षं वर्चो मूत्रविबन्धकृत् ।
पित्ताद्दुष्टाम्लकटुकं पीतराज्यम्बु, दाहकृत् ॥ ३ ॥

कफात्सलवणं सान्द्रं जले मज्जति पिच्छिलम् ।
संसृष्टलिङ्गं संसर्गात्त्रिलिङ्गं सान्निपातिकम् ॥ ४ ॥
यथा स्वलिङ्गांस्तद्व्याधीन् जनयत्युपयोजितम् ।
शिशोस्तीक्ष्णामतीक्ष्णां च रोदनाल्लक्षयेद्रुजम् ॥ ५ ॥
सोऽयं स्पृशेद्भृशं देशं यत्र च स्पर्शनाक्षमः ।
तत्र विद्याद्रुजं मूर्ध्नि रुजं चाक्षिनिमीलनात् ॥ ६ ॥
हृदि जिह्वौष्ठदशनश्वासमुष्टिनिपीड़ितैः ।
कोष्ठे विबन्धवमथुस्तनदंशान्त्रकूजनैः ॥ ७ ॥
आध्मानपृष्ठनमनजठरोन्नमनैरपि ।
वस्तौ गुह्ये च विण्मूत्रसङ्गत्रासदिगीक्षणैः ॥ ८ ॥
अथ धात्र्याः क्रियां कुर्य्याद्यथादोषं यथामयम् ।
तत्र वातात्मके स्तन्ये दशमूलं त्र्यहं पिबेत् ॥ ९ ॥
अथवाग्निवचापाठाकटुकाकुष्ठदीप्यकम् ।
सभार्ङ्गीदारुसरलद्व्यम्बिकालीकणेषणम् ॥ १० ॥
ततः पिबेदन्यतमं वातव्याधिहरं घृतम् ।
अनुवाच्छसुरामेवं स्निग्धं मृदु विरेचयेत् ॥ ११ ॥
बस्तिकर्म्म ततः कुर्य्यात् स्वेदादींश्चानिलापहान् ।
रास्नाजमोदासरलदेवदारुरजोऽन्वितम् ॥ १२ ॥
बालो लिह्याद् घृतं तैर्वा विपक्वं ससितोत्पलम् ।
पित्तदुष्टे मृताभीरुपटोलीनिम्बचन्दनम् ॥ १३ ॥
धात्री कुमारश्च पिबेत् क्वाथयित्वा ससारिवम् ।
अथवा त्रिफलामुस्तभूनिम्बकटुरोहिणीः ॥ १४ ॥
सारिवादिं पटोलादिं पद्मकादिं तथा गणम् ।
घृतान्येभिश्च सिद्धानि पित्तघ्नं च विरेचनम् ॥ १५ ॥
शीतांश्चाभ्यङ्गलेपादीन् युञ्ज्यात् श्लेष्मात्मके पुनः ।
यष्ट्याह्वसैन्धवयुतं कुमारं पाययेद् घृतम् ॥ १६ ॥

सिन्धूत्थपिप्पलीमद्वा पिष्टैः क्षौद्रयुतैरथ ।
पाठपुष्पैः स्तनौ लिम्पेच्छिशोश्च दशनच्छदौ ॥ १७ ॥
सुखमेवं वमेद्वालस्तीक्ष्णैर्धात्रीं तु वामयेत् ।
अथाचरितसंसर्गी मुस्तादिं क्वथितं पिबेत् ॥ १८ ॥
तद्वत्तगरपृथ्वीकासुरदारुकलिङ्गकान् ।
अथवातिविषामुस्तषड्ग्रन्थापञ्चकोलकम् ॥ १९ ॥
स्तन्ये त्रिदोषमलिने दुर्गन्ध्यामं जलोपमम् ।
विबद्धमच्छं विच्छिन्नं फेनिलं चोपवेश्यते ॥ २० ॥
अक्रुद्धानाव्यथावर्णं मूत्रं पीतं सितं घनम् ।
ज्वरारोचकतृट्छर्दिशुष्कोद्गारविजृम्भिकाः ॥ २१ ॥
अङ्गभङ्गोऽङ्गविक्षेपः कूजनं वेपथुर्भ्रमः ।
घ्राणाक्षिमुखपाकाद्या जायन्तेऽन्येऽपि तं गदम् ॥ २२ ॥
क्षीरालसकमित्याहुरत्ययं चातिदारुणम् ।
तत्राशु धात्रीं बालञ्च वमनेनोपपादयेत् ॥ २३ ॥
विहितायां च संसर्ग्यां वचादिं योजयेद्गणम् ।
निशादिं वाथवा माद्रीपाठातिक्ताघनामयान् ॥ २४ ॥
पाठाशुण्ठ्यमृतातिक्ततिक्तादेवाह्वसारिवाः ।
समुस्तमूर्वेन्द्रयवाः स्तन्यदोषहराः परम् ॥ २५ ॥
अनुबन्धे यथाव्याधि प्रतिकुर्वीत कालवित् ।
दन्तोद्भेदश्च रोगाणां सर्वेषामपि कारणम् ॥ २६ ॥
विशेषाज्ज्वरविड्भेदकासच्छर्दिशिरोरुजाम् ।
अभिष्यन्दस्य पोथक्या विसर्पस्य च जायते ॥ २७ ॥
पृष्ठभङ्गे विड़ालानां बर्हिणां च शिखोद्गमे ।
दन्तोद्भवे च बालानां नहि किञ्चिन्न दूयते ॥ २८ ॥
यथादोषं यथारोगं यथोद्रेकं यथाशयम् ।
विभज्य देशकालादींस्तत्र योज्यं भिषग्जितम् ॥ २९ ॥

त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च यत्।
अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी ॥ ३० ॥
सौकुमार्य्याल्पकायत्वात्सर्वान्नानुपसेवनात्।
स्निग्धा एव सदा बाला घृतक्षीरनिषेवणात् ॥ ३१ ॥
सद्यःस्तान्वमनं तस्मात्पाययेन्मतिमान् मृदु।
स्तन्यस्य तृप्तं वमयेत् क्षीरक्षीरान्नसेविनम् ॥ ३२ ॥
पीतवन्तं तनुं पेयामन्नादं घृतसंयुताम्।
वस्तिं साध्ये विरेकेण मर्शेन प्रतिमर्शनम् ॥ ३३ ॥
युञ्ज्याद्विरेचनादींस्तु धात्र्या एव यथोदितान्।
मूर्वाव्योषवराकोलजम्बुत्वग्दारुसर्षपाः ॥ ३४ ॥
सपाठा मधुना लीढ़ाः स्तन्यदोषहराः परम्।
दन्तपालीं समधुना चूर्णेन प्रतिसारयेत् ॥ ३५ ॥
पिप्पल्या धातुकीपुष्पधात्रीफलकृतेन वा।
लावतित्तिरवल्लूररजःपुष्परसप्लुतम् ॥ ३६ ॥
द्रुतं करोति बालानां दन्तकेसरवन्मुखम्।
वचाद्विबृहतीपाठाकटुकातिविषाघनैः ॥ ३७ ॥
मधुरैश्च घृतं सिद्धं सिद्धं दशनजन्मनि।
रजनी दारुसरलश्रेयसी बृहतीद्वयम् ॥ ३८ ॥
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा।
ग्रहणीदीपनं श्रेष्ठं मारुतस्यानुलोमनम् ॥ ३९ ॥
अतीसारज्वरश्वासकामलापाण्डुकासनुत्।
बालस्य सर्वरोगेषु पूजितं बलवर्णदम् ॥ ४० ॥
समङ्गधातुकीरोध्रकुटन्नटबलाह्वयैः।
महासहाक्षुद्रसहाक्षुद्रबिल्वशलाटुभिः ॥ ४१ ॥
सकार्पासीफलैस्तोये साधितैः साधितं घृतम्।
क्षीरमस्तुयुतं हन्ति शीघ्रं दन्तोद्भवोद्भवान् ॥ ४२ ॥

अक्ष्यामयेषु त्रिफला गुडूची वातास्ररोगे मथितं ग्रहिण्याम्
कुष्ठेषु सेव्यः खदिरस्य सारः सर्वेषु रोगेषु शिलाह्वयं च ॥५०

उन्मादं घृतमनवं शोकं मद्यं विसंस्मृतिं ब्राह्मी।
निद्रानाशं क्षीरं जयति रसाला प्रतिश्यायम् ॥ ५१ ॥
मांसं कार्श्यं लशुनः प्रभञ्जनं स्तब्धगात्रतां स्वेदः।
गुडमञ्जर्याः खपुरो नस्यां स्कन्धांसबाहुरुजम् ॥ ५२ ॥
नवनीतखण्डमर्दितमौष्ठं मूत्रं पयश्च हन्त्युदरम्।
नस्यं मूर्द्धविकारान् विद्रधिमचिरोत्थमस्रविस्रावः ॥५३
नस्यं कवलमुखजां नस्याञ्जनतर्पणानि नेत्ररुजः।
वृद्धत्वं क्षीरघृते मूर्च्छां शीताम्बुमारुतच्छायाः ॥५४॥
समशुक्त्यार्द्रकमात्रा मन्दे वह्नौ श्रमे सुरा स्नानम्।
दुःखसहत्वे स्थैर्य्यं व्यायामो गोक्षुरहितः कृच्छ्रे ॥५५॥
कासे निदिग्धिका पार्श्वशूले पुष्करजा जटा।
वयसः स्थापने धात्री त्रिफला गुग्गुलुर्व्रणे ॥ ५६ ॥
वस्तिर्वातविकारान् पैत्तान् रेकः कफोद्भवान् वमनम्।
क्षौद्रं जयति बलासं सर्पिः पित्तं समीरणं तैलम् ॥ ५७
इत्यग्र्यं यत् प्रोक्तं रोगाणामौषधं शमायालम्।
तद्देशकालबलतो विकल्पनीयं यथायोगम् ॥५८॥

इत्यात्रेयादागमय्यार्थसूत्रं तत् सूक्तानां पेशलानामतृप्तः।
भेडादीनां सम्मतो भक्तिनम्रः पप्रच्छेदं संशयानोऽग्निवेशः

दृश्यन्ते भगवन्! केचिदात्मवन्तोऽपि रोगिणः।
द्रव्योपस्थात्दसम्पन्ना वृद्धवैद्यमतानुगाः ॥ ६० ॥
क्षीयमाणामयप्राणा विपरीतास्तथापरे।
हिताहितविभागस्य फलं तस्मादनिश्चितम् ॥ ६१ ॥
किं शास्तिं शास्त्रमस्मिन्निति कल्पयतोऽग्निवेशमुख्यस्य
शिष्यगणस्य पुनर्वसुराचख्यौ कात्स्न्र्यं तस्तत्त्वम् ॥ ६२ ॥

न चिकित्साऽचिकित्सा च तुल्या भवितुमर्हति ।
विनापि क्रियया स्वास्थ्यं गच्छतां षोडशांशया ॥६३॥
आतङ्कपङ्कमग्नानां हस्तालम्बो भिषग्जितम् ।
जीवितं म्रियमाणानां सर्वेषामेव नौषधात् ॥ ६४॥
न ह्युपायमपेक्षन्ते सर्वे रोगा न चान्यथा ।
उपायसाध्याः सिध्यन्ति नाहेतुर्हेतुमान् यतः ॥६५॥
अप्येवोपाययुक्तस्य धीमतो जातुचित् क्रिया ।
न सिध्येद्दैववैगुण्यान्न त्वियं षोडशात्मिका ॥६६॥
कस्यासिद्धोऽग्नितोयादिस्वेदस्तम्भादिकर्मणि ।
न प्रीणनं कर्शनं वा कस्य क्षीरगवेधुकम् ॥ ६७ ॥
कस्य माषात्मगुप्तादौ वृष्यत्वे नास्ति निश्चयः ।
विण्मूत्रकरणाक्षेपौ कस्य संशयितौ यवे ॥ ६८ ॥
विषं कस्य जरां याति मन्त्रतन्त्रविवर्जितम् ।
कः प्राप्तः कल्यतां पथ्यादृते रोहिणिकादिषु ॥ ६९ ॥
अपि चाकालमरणं सर्वसिद्धान्तनिश्चितम् ।
महतापि प्रयत्नेन वार्य्यतां कथमन्यथा ॥ ७० ॥
चन्दनाद्यपि दाहादौ रूढमागमपूर्वकम् ।
शास्त्रादेव गतं सिद्धं ज्वरे लङ्घनबृंहणम् ॥ ७१ ॥
चतुष्पादगुणसम्पन्ने सम्यगालोच्य योजिते ।
मा कृथा व्याधिनिर्घातं विचिकित्सां चिकित्सिते ॥७२॥
एतद्धि मृत्युपाशानामकण्ठे छेदनं दृढम् ।
रोगोत्त्रासितभीतानां रक्षासूत्रमसूत्रकम् ॥ ७३ ॥
एतत्तदमृतं साक्षाज्जगत्यायासवर्जितम् ।
याति हालाहलत्वं च सद्यो दुर्भाजनास्थितम् ॥७४॥
अज्ञातशास्त्रसद्भावान् शास्त्रमात्रपरायणान् ।
त्यजेद्दूराद्भिषक्पाशान् पाशान् वैवस्वतानिव ॥७५॥

भिषजां साधुवृत्तानां भद्रमागमशालिनाम्।
अभ्यस्तकर्मणां भद्रं भद्रं भद्राभिलाषिणाम्॥ ७६॥
इति तन्त्रगुणैर्युक्तं तन्त्रदोषविवर्जितम्।
चिकित्सा शास्त्रमखिलं व्यापय्य परितः स्थितम्॥७७॥
विपुलामलविज्ञानमहामुनिमतानुगम्।
महासागरगम्भीरसंग्रहार्थोपलक्षणम्॥ ७८॥

अष्टाङ्गवैद्यकमहोदधिमन्थनेन
योऽष्टाङ्गसंग्रहमहामृतराशिराप्तः।
तस्मादनल्पफलमल्पसमुद्यमानां
प्रीत्यर्थमेतदुदितं पृथगेव तन्त्रम्॥ ७९॥

इदमागमसिद्धत्वात् प्रत्यक्षफलदर्शनात्।
मन्त्रवत् सम्प्रयोक्तव्यं न मीमांस्यं कथञ्चन॥ ८०॥
दीर्घजीवितमारोग्यं धर्ममर्थं सुखं यशः।
पाठावबोधानुष्ठानैरधिगच्छत्यतो ध्रुवम्॥ ८१॥

एतत् पठन् संग्रहबोधशक्तः स्वभ्यस्तकर्मा भिषगप्रकम्प्यः।
आकम्पयत्यन्यविशालतन्त्रकृताभियोगान् यदि तन्न चित्रम्॥८

यदि चरकमधीते तद् ध्रुवं सुश्रुतादि-
प्रणिगदितगदानां नाममात्रेऽपि बाह्यः।
अथ चरकविहीनः प्रक्रियायामखिन्नः
किमिह खलु करोतु व्याधितानां वराकः? ॥८३॥

अभिनिवेशवशादभियुज्यते सुभणितेऽपि न यो दृढमूढकः।
पठतु यत्नपरः पुरुषायुषं स खलु वैद्यकमाद्यमनिर्विदः॥८४॥
वाते पित्ते श्लेष्मशान्तौ च पथ्यं तैलं सर्पिर्माक्षिकञ्च क्रमेण।
एतद् ब्रह्मा भाषते ब्रह्मजो वा का निर्मन्त्रे वक्तृभेदोक्तिः? ॥८५

अभिधातृवशात् किंवा द्रव्यशक्तिर्विशिष्यते।
अतो मत्सरमुत्सृज्य माध्यस्थमवलम्ब्यताम्॥ ८६॥

ऋषिप्रणीते प्रीतिश्चेन्मुक्त्वा चरकसुश्रुतौ ।
भेडाद्याः किं न पठ्यन्ते तस्माद्ग्राह्यं सुभाषितम् ॥८७॥
हृदयमिव हृदयमेतत् सर्वायुर्वेदवाङ्मयपयोधेः ।
हृष्ट्वा यच्छुभमाप्तं शुभमस्तु परं ततो जगतः ॥ ८८ ॥
इति श्रीसिंहगुप्तसूनुवाग्भटविरचितायामष्टाङ्गहृदय-
संहितायामुत्तरस्थानं समाप्तम् ।

---

# सूचीपत्रम् ।

पृष्ठा

## अथ सूत्रस्थानम् ।



## शारीरस्थानम् ।

पृष्ठा

## निदानस्थानम् ।



---

## चिकित्सितस्थानम् ।



---

## कल्पस्थानम् ।

## उत्तरस्थानम् ।

११२ चरकसंहिता (वैद्यक) सम्पूर्ण ६
११३ रसेन्द्रचिन्तामणितथारसरत्नाकर ६
११४ भगवद्गीता शाङ्करभाष्य आनन्दगिरिकृतटीका तथा सुबोधिनीसमेत ४
११५ शब्दशक्तिप्रकाशिका (न्याय) ॥०
११६ मालतीमाधवनाटक सटीक ॥०
११७ भट्टिकाव्य टीकाद्वयसहित २
११८ काव्यप्रकाश अलङ्कार सटीक ४
११९ शाण्डिल्यसूत्र सभाष्य ॥०
१२० हनुमन्नाटक महानाटकसटीक १॥०
१२१ महानाटकम् (हनुमन्नाटकम्) ॥०
१२२ दशरूपकम् (अलङ्कार) १
१२३ चम्पूरामायण सटीक १
१२४ (चम्पू रामायणम्) भोजचम्पू ॥०
१२५ मार्कण्डेयपुराणम् २
१२६ गोलाध्यायः भास्कराचार्य्यकृत ॥०
१२७ गणिताध्यायः भास्कराचार्य्यकृत १
१२८ पञ्चदशी (सटीक) वेदान्त १॥०
१२९ पातञ्जलदर्शन भोजवृत्तिसहित १
१३० शकुन्तलानाटक सटीक १
१३१ शब्दरूपादर्शः ॥०
१३२ वाराहीसंहिता (ज्योतिष) २
१३३ तर्कामृत (जगदीशकृत) न्याय ।०
१३४ द्वात्रिंशत्पुत्तलिकासिंहासन १
कर्षर उत्तररामचरितनाटक सटीक १
बाधारोगवि रविनय १॥०
रकनाटक सटीक १॥०
वमनविरच...
सटीक (अलङ्कार) १
दस्तिविध्यध्यायः
(वाग्भट) वैद्यक ३
वस्यविक्षध्यायः

१४० शुक्रनीतिसार सटीक
१४१ गीतगोविन्द काव्य सटीक
१४२ अग्निपुराणम्
१४३ विष्णुपुराणम् सटीक
१४४ मीमांसादर्शन शवरभाष्य
१४५ अध्यात्मरामायणम् सटीक
१४६ महानिर्वाणतन्त्रम् सटीक
१४७ मीमांसादर्शनस्य अधिकरण
माधवाचार्य्यविरचिता
१४८ श्रुतबोधः (छन्दोग्रन्थ) स
१४९ बालरामायणनाटक सटीक
१५० लिङ्गपुराणम्
१५१ चण्डकौशिकनाटक सटीक
१५२ चैतन्यचन्द्रोदयनाटक
१५३ कलापव्याकरणं वा कात
१५४ कुसुमाञ्जलि सटीक (न्याय)
१५५ सङ्गीतपारिजात(सङ्गीत
१५६ साङ्ख्यसार
१५७ नागानन्दनाटक सटीक
१५८ नागानन्दनाटक मूल
१५९ ब्रह्मवैवर्त्तपुराण सम्पूर्ण
१६० वैशेषिकदर्शनम् सभाष्य
१६१ कल्किपुराणम्
१६२ चाणक्यशतकम् सटीक
१६३ श्रीहर्षचरितबाणभट्टकृत
१६४ कर्पूरमञ्जरीनाटिका सटीक
१६५ चन्द्रालोक प्राचीन अलङ्कार
१६६ लघुकौमुदीव्याकरणम्
१६७ गरुड़पुराणम्

ता संस्कृतविद्यामन्दिरे बि, ए, उपाधिधारिणः

